श्रीश्रीदुर्गा

शरणम्।

# संस्कृतचन्द्रिका।

श्रीश्रीगणेशाय नमः।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव।

मायावलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी॥

## उद्भट-श्लोकाः।

"विपद्घनध्वान्त सहस्रभानवः, समीहितार्थार्पणकामधेनवः।
अपारसंसारसमुद्रसेतवः, पुनन्तु मां ब्राह्मणपादरेणवः॥१२॥"

"वाताभ्रविभ्रममिदं वसुधाधिपत्य, मापातमात्रमधुरा विषयोपभोगाः।
प्राणाः कुशाग्रजलबिन्दुसमा नराणां, धर्म्मः सखा परमहो परलोकयाने॥१३॥"

"नीत्वा वह्निर्भवनतोऽथ वपूंषि दग्ध्वा, दत्वाञ्जलिं सपदि वन्धुजनो निवृत्तः।
एकाकिनस्तपननन्दनमन्दिरेषु, गोविन्दवन्धुरसि मे परमस्त्वमेव॥१४॥"

"विषयो विसिनीदलाम्बुव, द्धपुरपायि न सम्पदः स्थिराः।
अनपायि नगनन्दिनी,चरणाराधनमेव केवलम्॥१५॥"

"इयं ब्राह्मणनौ-राजन्! विपरीता भवार्णवे।
तरन्त्यधः स्थितास्तस्या मज्जन्त्युपरिसंस्थिताः॥१६॥"

"निदर्शनं निधनभेतयोर्द्वयोस्तारतम्यविधिमुग्धचेतसा।
ख्यापनायविधिना पुरा कृता, रेफ एव जयवैजयन्तिका॥१७॥"

"प्रायेण धनिनामेव धनलोभोऽभिवर्द्धते।
पश्य कोटिद्वयोपेतं लक्षाय प्रणतं धनुः॥१८॥"

"सरलयोः सखि! सख्यमनारतं, कुटिलयोर्घटनैव न जायते।
यदि भवेत् सरलस्य कुटिलेन वा, न चिरमस्ति धनुःशरयोरिव॥"

"अयि वनप्रिय! विस्मृत एव किं, बलिभुजो विघसो भवताधुना।
यदनयैव कुहूरिति विद्यया, न पततश्चरणो धरणो तव॥"

# क्रोधः।

क्रोधो हि विषमो रिपुः शरीरे निवसति। यो हि क्रोधस्य वशतामियर्त्ति स जीवदवस्थायामेव पशुत्वं लभेत, वा पशुतोऽपि हीनतरः स्यात्। क्रोधः खलु पश्चात् पश्चादविश्रान्तं परिभ्रमति लब्धावसरस्तु क्रोधिनमधःपातयति।

क्रोधपरतन्त्रात् नरात् दया दूरीभवति पैशुन्यं तस्मिन् प्रतिष्ठते, तं लज्जा परित्यजति, साहसं भजते, उपचिकीर्षा पलायते, द्रोहः सञ्चरति, गुणग्राहित्वं तिरोभवति, ईर्षा समुपैति, सत्यमपगच्छति, असूया समभ्येति, दातृत्वं निर्याति, स परस्वमपहरति, देयमपि धनं नार्पयति, कृत्वापि ऋणमपथे धनं विसृजति। क्रोधपरतन्त्रः सुजनोऽपि दुर्ज्जनति, सौम्यशीलोऽपि अग्नीयते, ब्राह्मणोऽपि चण्डालायते, शान्तोऽपि उन्मत्तायते, चक्षुष्मानपि अन्धायते, सुन्दरोऽपि विकृतायते, नरोऽपि वानरायते, किमधिकं क्रोधापहृतबुद्धिः पितरमपि श्यालकेति आक्रोशति, आत्मानमपि रज्ज्वा गले उद्बध्नाति। क्रोधिनः सकाशात् गुरुर्लघुरिति हितमहितमिति मतिरपसरति। अतएव क्रोधं जह्युः।

अस्मद्देशे कश्चिदन्त्यजो रसं निष्कासयितुं खर्ज्जूरतरोरग्रे उदस्थात्। तस्मात् स्वक्षेत्रे शस्यमदतीं गां अद्राक्षीत्। अवतीर्य्य च तस्मात् क्रोधाधीरः खर्ज्जूरच्छेदनं तीक्ष्णं मूलतो वक्रदात्रं गृहीत्वा दात्रमूलस्थकाष्ठदण्डेन गां ताड़यामीति कृत्वा दृढ़मुष्टिबद्धं दात्रं तीर्य्यगुद्यम्य यावद् गां प्रहर्त्तुमैच्छत्, तावच्चन्द्रार्द्धाकारेण दात्राग्रेण पश्चात् गतेन स्वकन्धरमच्छैत्सीत्।

अतएव हे विद्यार्थिनः! क्रोधमनुसृत्य यत् कर्म्म कर्त्तुमिच्छथ, तत् कर्म्म कुरुत, परन्तु क्रोधाधीनाः सन्तो न कुरुत। क्रोधे प्रशमिते विविच्य किञ्चित् कालान्तरमासाद्य कुर्य्युश्चेत् तदा सुष्ठु भवेत्।

प्रवहति प्रचण्डे झञ्झाप्रभञ्जने किमिति समुद्रे वहित्रं चाल

येयुः ? क्रोधवशवर्त्तिनो विपत् सततं स्वकराग्रे सन्तिष्ठते । क्रोधवशवर्त्तित्वं रसनया क्षुरधारालेहनं भुजङ्गमुखचुम्बनं, द्वारमवरुध्य स्वगृहे वह्निप्रक्षेपणञ्च समम् ।

एकदा कश्चिद्ब्राह्मणः ब्राह्मणीमिवमन्वशात्—अयि गृहिणि ! पुनः पुनर्निषिध्यमानापि त्वं कथं गृहपटले आर्द्रवस्त्रं शोषयितुं ददासि ? एवं क्रियमाणे वस्त्रस्य ऊर्द्ध्वार्द्धं न सम्यक् प्रसरति सुतरां न शुष्यति, अथ वायुना भूमौ पातयति ततो धूलयो मलिनयन्ति वस्त्रम् । एवं प्रबोधितापि गृहिणी श्रुत्वापि नाशृणोत् । अथापरेद्युः भूमौ तथा लुठितं वस्त्रमालोक्य मृदुनिर्भर्त्स्य च ब्राह्मणीं विरराम ।

अथापराह्ने ब्राह्मणः प्रेयसीप्रदत्तं ताम्बूलं चर्व्वन् मृदु चाटु च प्रजल्पन् मृदु मृदु हसंश्च पश्यन्त्या गृहिण्याः तत् वस्त्रं एकधा द्विधा त्रिधा च कृत्वा छिन्नवान्, ब्राह्मणी तु कपोलान्तरेव किमपि मन्दं मन्दं वावच्यमाना स्फीतसुखीबभूव । ब्राह्मणस्तु पुनः सुन्दरतरं वस्त्रमन्यत् प्रदाय तां प्रसादयन् न पुनर्मद्वचनमवहेलय आर्द्रवस्त्रञ्च गृहच्छदौ मा प्रापय एवं चिराय अन्वशिषत् ।

यदि मन्यध्वे नापराधिनं क्षमावहे तदा—

"अपराधिनि चेत् क्रोधः क्रोधे क्रोधः कथं न ते ।
धर्म्मार्थकाममोक्षाणां चतुर्णां परिपन्थिनि ॥"

---

## वशीकृतभूतः ।

(पूर्व्वप्रकाशितात् परम् ।)

सुखं खलु अदृष्टायत्तं प्राणिनाम् । बलात् समयमनुकूलयितुं कोऽपि न शक्नुते, प्रसह्य सुखमधीनीकर्त्तुं कोऽपि न क्षमते, निर्झरिणी स्रोतोऽपि प्रतिकूलयितुं कोऽपि नेष्टे, अदृष्टमपि प्रसादयितुं कोऽपि न प्रभवति ।

वशीकृतभूतोऽपि वामदेवः सत्स्वपि प्रभूतेषु धनेषु विद्यमानास्वपि अमरावतीप्रतिमासु पुरीषु न शान्तिमधिगच्छति। सत्यामपि पयःफेणनिभायां शय्यायां निकामं न शेते, विद्यमानेषु विविधेषु भोक्तव्येषु च न भुङ्क्ते, एवं न विहरति, न क्रीड़ति, नाध्यापयति, नाधीते च वामदेवः। प्रतिक्षणमेव समेत्य शङ्कुतुण्डः "किँ कँरोँमिँ कँर्म्मँ उँपँदिँशँ" इत्येवं व्याकुलीकरोति वामदेवम्। एवं दुश्चिन्तया अभिभूयमानः क्रमशः पूर्व्वतोऽपि शीर्णकायो जातः, किमधिकं श्मशानदग्धकाष्ठदृश्यतां प्राप वामदेवः, भूतोपासनया प्रायो भूतसाम्यं जगाम। पतिप्राणापि सती वामदेवपत्नी तदानीं भूतग्रस्तात् वामदेवात् बिभेति, न सा तेन शेते, न वा प्रियमालपति, वामदेवस्तु वह्निर्व्वाप्यामिव त्रितले सौधतले क्लच्छ्रेण दिनानि यापयन्ति।

तदा समुचितं कर्म्मापि निर्द्दिष्टुमशक्नुवानो वामदेवः केवलं समयमतिवाहयितुं रक्षितुञ्च प्राणान् असम्यगेव किमपि कर्म्म कारयति।

कदाचिद्वा वामदेवानुमतो भूतः केषाञ्चित् वृक्षानुत्खातयति, वृक्षानुत्पाटयति, वापिकाः स्तब्धस्नभिः पूरयति, एवं भूतविप्लवात् देशा विषमस्था उपद्रुता विघ्नैर्व्वाध्यन्ते। सुतरां देशीयाः सर्व्वे वामदेवं विद्विषन्ति, किन्तु भूतभयात् न कोऽपि तं पराभावयन्ति। यदि कदाचित् केचित् वामदेवं विद्वेष्टुं वाञ्छन्ति, तदा तेषां पृष्ठे शङ्कुतुण्डो भूतः तालफलायमानां दृढ़मुष्टिं पातयति। वामदेवशासनात् तदा विधर्म्मानोऽपि धर्म्मतत्परा बभूवुः।

"सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्।"

(अथैकदा वामदेवस्य गुरुस्तत्रोपस्थितः प्राह च।)

गुरु। तात! किमेवं विषीदसि? प्रभूतेऽपि सुखोपयोगिनि धनादौ पानभोजने च किमिति जीर्णोऽसि? कस्ते व्याधिः? का वा दुश्चिन्ता?

वाम। देव ! एषा दैवविड़म्बना, भूतमुपासीनस्य मन्दभाग्यस्य एष दुर्म्मतेः परिणामः। इति आद्योपान्तं भूतवृत्तान्तं गुरवे यावत् निवेदयति, तावत् "गुरवः ! अपसरन्तु इतः अपसरन्तु इतः, एत्येति· भूतः" इति व्याकुलं बद्धाञ्जलिर्व्वामदेवोऽवदत्। गुरुरपि किञ्चिद्दूरं अपससार।

शङ्कु। प्रँभोँ ! "कँर्म्मँ उँपँदिँशँ।"

वाम। इतो दिनद्वयात् दूरस्थितं चतुष्पथे विराजमानं तं प्राचीणं तिन्तिड़ीवृक्षं सहस्रधा त्रोटय इति, (भूतस्तु हुहुङ्कारेणप्रस्थितः।)

ततश्च गुरुरागत्य भूतवृत्तान्तमादितः श्रुत्वा दृष्ट्वा च वामदेवव्यसनं सानुकम्पं उपदिदेश।

गुरु। वत्स ! वामदेव ! श्रूयतां मदुपदेशः येन भूतोपद्रवात् मुच्यते। पुनरागतं भूतं द्विशतहस्तं वंशविटपिनमानेतुमनुशाधि (इत्युक्त्वा गुरुरन्तराले स्थितः।)

( सहस्रधा तिन्तिड़ीतरुं विभज्य भूतः पुनरुपस्थितः। )

शङ्कु। प्रँभोँ किँ कँरोँमिँ कँर्म्मँ उँपँदिँशँ।

वाम। द्विशतहस्तं वंशतरुमाहर। (इति भूतः प्रस्थापितः।)

गुरुः। पुनरागतं भूतं एकशतहस्तं यावत् तं वंशं भूमौ निखन इत्यादिश।

शङ्कु। नँयँ वँशँ पुँनः किँ कँरोँमिँ कँर्म्मँ उँपँदिँशँ।

वाम। वंशार्द्धं तत्र निखन।

गुरु। पुनरागतं भूतं एवमादिश, यत् मम द्वितीयमादेशं यावत् तस्मिन् प्रोथिते वंशवृक्षे मूलतः प्रतिपर्व्वं क्षणं स्थित्वा स्थित्वा अग्रं यावत् सञ्चर, पुनरग्रात् तथा मूलमागच्छ, एवमारोहावरोहं विधेहि। (भूतस्तु शिरः कण्डूय कण्डूय कथयति।)

शङ्कु। प्रँभोँ किँमिँ वँसँनँर्थँ कँर्म्मँणिँ निँयुँज्यँतेँ ? नैँवँ-सुँचिँतँम्ँ। ( तच्छ्रुत्वा वामदेवः कथयति। )

वाम। मद्वचनं यदि न शृणुयास्तदा क्रोधराजं भूताधिपं निवेद्य चक्षुस्ते पाटयामि। श्रुत्वैवं वामदेवभाषितं भीतभीतः विमनायमानः अधुना चिराय निबद्धोऽस्मीति चिन्तयानश्च वंशविटपिनो मूलतोऽग्रं अग्रात् मूलं आगमनोद्गमनं कर्त्तुं आरभते स्म।

गुरुणा एवं कृतनिश्चिन्तो वामदेवः सच्छन्दान्तःकरणो दिनानि सुखेनानयत्, क्रमशस्तु कान्त्या श्रिया तुष्ट्या पुष्ट्या च धरायां राकारजनीकर इव रराज।

कदाचित्तु प्रयोजनमनुसृत्य लोकैरसाध्यं कर्म्म शङ्कुतुण्डेन भूतेन निष्पाद्य "पुनर्मे द्वितीयमादेशं यावत् तत्र वंशे आरोहावरोहं कुरु" इत्येवं तं नियोज्य पुत्रादिभिः चिरसुखमुवास। देशोऽपि निरुपद्रवो जातः अधर्म्मोऽपि देशात्तस्माद्दूरीभूतः। मन्त्रदेवतयोः प्रत्यक्षत्वमपि नास्तिका अपि स्वीकृत्य आस्तिका बभूवुः। वामदेवशासनात् सत्ययुगमिव तदा पुनः प्रवर्त्तते स्म।

उपसंहारः।

श्राबितं भूतवृत्तान्तम्, किन्तु अत्र प्रसङ्गे मन एव भूतत्वेन बुध्यताम्। मनस्तु सर्व्वदैव कर्म्मार्थं समुद्वेजयत्यस्मान्, वयं निद्रामः मनस्तु निरलसं तदापि जागर्त्ति, पर्व्वताग्रे रसातलतले हिंस्रेषु सत्त्वेषु तीर्थेषु च तदा अविश्रामं पर्य्यटति। यदा वयं मनसे कर्म्म निर्द्दिष्टुं न शक्नुमः तदा मनोऽस्मान् विक्षेपयति, व्याकुलयति, व्यामोहयति, घाटाच्च त्रोटयति। अतएव प्रबलेन भूतकल्पेन वशीकृतेन मनसा साधयतां तावत् सांसारिकं कर्म्म, यदा तु न मिलिष्यति अन्यत् कर्म्म, तदा जपमालां करे नीत्वा तत्रैव मनोभूतं निवेशय, इष्टमन्त्रजपकर्म्म कारय, एवं क्रमेण अनुलोमविलोमेण ईश्वरनाम मनसा स्मर, पुनः प्रयोजनमनुसृत्य मालातः प्रत्याहृत्य मनः सांसारिके कर्म्मणि योजय, निष्पाद्यमाने च तस्मिन् कर्म्मणि पुनर्म्मालाजपे मनोभूतं नियोजय, एवं हि अभ्यासवशेन कियन्ति दिनान्यतीत्य मनः करा-

ङ्गुलिश्च एवमेव संस्कारमेष्यति, यत् बहिरन्यत् कर्म्म कुर्व्वदपि मन ईश्वरमेव स्मरिष्यति, कराङ्गुलिश्च मालां जपेन भ्रामयिष्यति। तेन हि मरणक्षणेऽपि ईश्वरनाम स्मृत्वा स्मृत्वा मरिष्यते।

तथाचोक्तम्।

"सूक्ष्मातिसूक्ष्मविषयं परिषेवमाणी, धीरो न मुञ्चति मुकुन्दपदारविन्दम्।
सङ्गीतवाद्यकरताल वशं गतापि, मौलिस्थकुम्भपरिरक्षणधीर्नटीव॥"

इति वशीकृतभूते तृतीयं काण्डं समाप्तम्॥

---

## पूर्वकालीनाः कथं दीर्घायुषः?

वर्षीयान् कश्चिदेकदा अत्र नगरीस्थितेन केनापि महीयसा धनिना बन्धुमरणदुःखमुपेयुषा पृष्टः "पूर्व्वकालीनाः कथं दीर्घायुषः कथं वा नव्या अल्पायुषः?" इति। परन्तु नव्यैः मांससूपं घृतं दुग्ध मपूपः पलान्नादिकञ्च बलवर्द्धकमायुष्करञ्च सेव्यन्ते, तत्रापि परिमितम्, नियमितसमयश्च न व्यतिक्राम्यते, सत्परिच्छदः परिधीयते, घोटकशकटेन गम्यते, आकृष्टव्यजनवायुः सेव्यते, सुगन्धि काचकुपीजलं पीयते, दुर्गप्रान्तरे विक्रियते, मधुरं गीयते, तदा श्रूयते, यन्त्रं वा वाद्यते, त्रितले प्रासादे शय्यते, पुनः प्रत्यूषे समुत्थीयते, दुग्धपत्रकषायः पीयते, प्रातः समीरणश्च समाक्रियते। सर्व्वमेवैतत् वास्तविकं बलकरमायुष्करञ्च, तथापि आधुनिकैः कथ मकाले म्रियते? समुन्नतये समाजः पुनर्येषां मुखकमलमवलोकते, हस्ताव लम्बनमपेक्षते, ते एवासमाप्तपञ्चाशतः अप्राप्तपञ्चाशतो वा अकाल एव करालकालकवले प्रलीयन्ते इति।

तच्छ्रुत्वा वर्षीयान् आह—श्रीमता यदुक्तं तत्सर्व्वमेव सत्यम् "आधुनिका अल्पायुषः" इति, परन्तु नव्यानां विपरीतमाचरन्तः शिक्षिता अशिक्षिता वा पुरातनमतानुयायिनः ब्राह्मणा ब्राह्मण-

पण्डिताः प्रायोऽपरेऽपि स्वधर्म्मावलम्बिनश्च प्रायोदीर्घजीविनः। इत्यपि दृश्यताम्।

अत्र दरिद्रा अपि भिक्षान्नजीविनोऽपि ब्राह्मणा ब्राह्मणपण्डिता वा स्वगृहे वलवन्ति दुग्धदधिघृतमांसादीनि नाभ्यवहर्त्तुं शक्नुवते, परन्तु परगृहे निमन्त्रिता आकण्ठमुदरपूरं शाकान्मिष्टान्नं यावत् हेलयैव भुञ्जते, घृतभर्ज्जितानि गोधूमपिष्ठकानि सार्द्धपणमितानि, व्याघ्रापणरसलड्डुकांश्च दशगण्डिका हसन्त एव उदरसात् कुर्व्वते। तांस्तु पक्वकेशान् स्खलितदन्तोऽपि बलिष्ठान् भोक्तॄनवलोक्य तदा अनेके दर्शका अगस्त्यसोदरान् सम्मन्यन्ते, ते खलु दीर्घजीविनो हृष्टपुष्टा बलिनो नीरुजश्च दृश्यन्ते। इत्यपि विचार्य्यताम्।

किन्तु न ते यथासमयं भुञ्जते, भुञ्जते वा कदाचित् प्राह्णे, कदाचिदपराह्णे, कदाचित् एकभक्तं कदाचित् चतुःषष्ट्युपचारं वा, कृतनिमन्त्रणाः श्रुतनिमन्त्रणा वा ते दरिद्रा वीतच्छत्रोपानहः जितलौहक्षुरतुरगाः प्रखररौद्रे वर्षासु वा दशाष्टौ वा क्रोशान् यान्त्यायान्ति च, न कोमलायां शय्यायां शेरते, इत्यपि श्रीमता भवता द्रष्टव्यम्।

अत्र व्यभिचारद्वयं विचार्य्यते, कारणव्यभिचारः कार्य्यव्यभिचारश्च। यत् नव्येषु दीर्घायुषः कारणं वर्त्तते किन्तु कार्य्यभूतं दीर्घायुर्नास्ति, इति कारणव्यभिचारः। एवं प्रत्नशिक्षितेषु दीर्घायुषः कारणं नास्ति परन्तु कार्य्यभूतं दीर्घायुरस्तीति—कार्य्यव्यभिचार इति।

अत्र तेन महीयसा श्रीमता तत्त्वे जिज्ञासिते, तेन वर्षीयसा प्रोक्तम्—अत्र अन्वयव्यतिरेकेण* दीर्घजीवनं प्रति स्वस्वसदाचार एव कारणमवधार्य्यते। तथाहि प्रत्नशिक्षितेषु असत्यपि घृतादिभोजने आयुष्कारणे सदाचारस्तथा दीर्घजीवनञ्च वर्त्तते, एवं नव्येषु सत्यपि आयुष्कारणे घृतादिभोजने सदाचारस्तथा दीर्घजीवनञ्च न वर्त्तते।

अधुनातनाः प्रत्नसम्प्रदाया ब्राह्मणा विप्लावितधर्म्मेऽपि अस्मिन्

---

* तत्सत्त्वे तत्सत्ता अन्वयः। तदसत्त्वे तदसत्ताव्यतिरेकः।

कलिकाले यदि वा भ्रष्टधर्म्मप्राया भवन्तु, वदन्तु मिथ्यावाचः, कुर्व्वन्तु अयाज्ययाजनं, विदधतु शाठ्यम्, अन्नचिन्तया व्याकुलिता आपद्ग्रस्ताः कुर्व्वन्तु असत्प्रतिग्रहम्, तत् सर्व्वमेव स्वीक्रियते, किन्तु अक्षतस्नानाः समाश्रितस्वेच्छाचाराः प्रायशस्ते न लक्ष्यन्ते। अन्ततस्ते सावित्रीमुपासते, सन्ध्यामनुतिष्ठन्ति, प्राणायाममाचरन्ति, "ओं नमः शिवायेति" शुष्कविल्वपत्रमपि शिवायार्पयन्ति, सुतरां कारणान्तराभावे तेषां दीर्घजीवनं प्रति स्वल्पोऽपि सन्ध्यावन्दनादिः सदाचारः अन्यतमं कारणमनुमीयताम् (२)। यथा प्रदीपस्य सत्तायां आलोकस्य सत्ता, प्रदीपस्यासत्तायामालोकस्यासत्ता प्रत्यक्षसिद्धा, अतएव यथा अत्र अन्वयव्यतिरेकात् आलोकं प्रति प्रदीप एव कारणम्, तथा अत्रापि। एवं कारणान्तराभावे नव्यानामस्माकं दीर्घायुष्कारणं स्वाचारो नास्तीति कार्य्यदर्शनादनुमातुं कः प्रतिबन्धकः?।

अत्रावितथ्यवचना मुनय एव तदब्रुवन्। यथा मनुः। ४।१५५—१५८।

"श्रुतिस्मृत्युदितं सम्यक् निबद्धं स्वेषु कर्म्मसु।
धर्म्ममूलं निषेवेत सदाचारमतन्द्रितः॥
आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः।
आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम्॥
दुराचारो हि पुरुषो लोके भवति निन्दितः।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च॥
सर्व्वलक्षणहीनोऽपि यः सदाचारवान् भवेत्।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति॥"

यथा च मनुः। ५।४।
"अनभ्यासेन वेदानामाचारस्य च वर्ज्जनात्।
आलस्यादन्नदोषाच्च मृत्युर्व्विप्रान् जिघांसति॥"

यथा च भगवान् विष्णुरपि। ७१।९०—९२।
"श्रुतिस्मृत्युदितं सम्यक्, साधुभिश्च निषेवितम्।
तमाचारं निषेवेत धर्म्मकामो जितेन्द्रियः॥

(२) स्वल्पमप्यस्य धर्म्मस्य त्रायते महतो भयात्। गीता।२।४०।

आचाराल्लभते चायुराचारादीप्सितां गतिम्।
आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम्॥
सर्व्वलक्षणहीनोऽपि यः सदाचारवान्नरः।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति॥"

यथा च वशिष्ठोऽपि। ६।१—९।

"आचारः परमो धर्मः सर्व्वेषामिति निश्चयः।
हीनाचारपरीतात्मा प्रेत्य चेह विनश्यति॥
नैनं तपांसि न ब्रह्म नाग्निहोत्रं न दक्षिणा।
हीनाचाराश्रितं भ्रष्टं तारयन्ति कथञ्चन॥"

"आचारहीनं न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः।
छन्दांस्येनं मृत्युकाले त्यजन्ति नीड़ं शकुन्ता इव जातपक्षाः॥"

"दुराचारो हि पुरुषो लोके भवति निन्दितः।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च॥
आचारात् फलते धर्म्म आचारात् फलते धनम्।
आचारात् श्रियमाप्नोति आचारो हन्त्यलक्षणम्॥
सर्व्वलक्षणहीनोऽपि यः सदाचारवान्नरः।
श्रद्दधानोऽनसूयश्च शतं वर्षाणि जीवति॥"

(क्रमशः)

# आयुर्व्वेदः।

## रोगनिर्णय-प्रकरणम्।

तत्र वातपित्तकफाः।

१। मानवदेहे रसरक्तादयो धातवः। स्तनदुग्धम्, ऋतुशोणितम्, दन्तादयश्च उपधातवः। कर्णमलादयो धातुमलाः। पुरीषादयो देहमलाः। आमाशय-फुफ्फुसादयो देहयन्त्राणि। शिरास्नायुप्रभृतीनि नाड़ीसंज्ञकानि च। इत्थमसंख्यवत् पदार्था विद्यन्ते। अतः सञ्जाते देहेऽस्मिन् ज्वर-प्रमेह-कासादौ कस्मिंश्चित्

रोगे, किं मूलः किमाधारश्चायं रोग इति वितर्किते चिन्ताशीलानां शिरो घूर्णते इत्यत्र कः सन्देहः?

२। अनुमीयते खलु, अस्मादेव यूरोपादिभूखण्डजाता इदानीन्तना श्चिकित्सकाः प्रमेह-कास-बहुमूत्र-श्वासप्रभृतौ कस्मिंश्चित् रोगे निर्णेतव्ये विविधयन्त्रसाहाय्येन देहस्य पृथक् पृथक् यन्त्राणि, आतुरेण उद्गीर्णानि आहारद्रव्याणि च परित्यक्तानि पुरीषमूत्रादीनि च देहस्थविविधद्रव्याणि सूक्ष्माणुसूक्ष्मं परीक्षितुं चेष्टन्ते। व्यापारोऽयमापाततः अनेकेषां चित्ताकर्षको भवति, भवितुमर्हति च आड़म्बरबाहुल्यात्।

३। परन्तु, विषयेऽत्र बुद्धिमता विवेच्यम्, यत् मानवदेहेऽस्मिंस्त्रिविधपदार्थाः समवेताः। यथा, चैतन्यमयो जीवात्मा, अचेतनं रसरक्तादिकञ्च, चैतन्यसंयोगेन क्रियावन्ति विविधयन्त्राणि, शिरास्नायुप्रभृतीनि च। तेषु उल्लिखितपरीक्षया अचैतन्यजड़ांशस्यैव निर्णयः सम्भवेत्! परन्तु न चैतन्यांशस्य न वा चैतन्यसंयोगात् क्रियावतां पदार्थानाम्। किमधिकेन, बहुसहस्रमब्दम् असङ्ख्यमानवचेष्टया साधितेऽप्युत्कर्षे ईदृशपरीक्षया तत्तत्त्वनिर्णयो न हि सम्भवेत्। स हि देहाभ्यन्तरस्थः चैतन्यसंयोगाद् व्यापारविशेषः अतीन्द्रियो जीवात्मा च, ऋते ज्ञानचक्षुषा तपश्चक्षुषा च न ज्ञातुं शक्यते इति तत्त्वानुसन्धायिनां समीचीनः सिद्धान्तः। यदाह भगवानायुर्व्वेदः।

"अस्मिन् शास्त्रे पञ्चमहाभूतशरीरिसमवायः पुरुषः।"

इति सौश्रुतायुर्व्वेदे सूत्रस्थाने प्रथमाध्याये॥

किञ्च,—"षड्धातुजन्तु पुरुषो * * * *

* * सांख्यैराद्यः परीक्षितः॥"

इति चरकायुर्व्वेदे सूत्रस्थाने, पञ्चविंशाध्याये॥

तथाच,—"न शक्यश्चक्षुषा द्रष्टुं देहे सूक्ष्मतमो विभुः ।
दृश्यते ज्ञानचक्षुर्भिस्तपश्चक्षुर्भिरेव च ॥"

इति सौश्रुतशारीरस्थाने पञ्चमाध्याये ।

४। अस्माकमायुर्व्वेदशास्त्रं न हि भ्रमप्रमादादि स्वतःसिद्ध-दोषसम्पन्नानां (१) मानुषाणां वाह्यतत्त्वानुसन्धानजनितज्ञान-समष्टिरेव। अपि तु मूलमस्य ईश्वरवाक्यस्वरूपाश्चत्वारो वेदाः ।

तथाहि ।

"ऋग्यजुः सामाथर्व्वाख्यान् दृष्ट्वा वेदान् प्रजापतिः ।
विचिन्त्य तेषामर्थं वै आयुर्व्वेदं चकार सः ॥"

इति ब्रह्मवैवर्त्तपुराणे ।

५। मानवानां ज्ञाननेत्रोन्मीलनोपायाः व्याकरण-साहित्या-लङ्कार-दर्शनेतिहास-भूतत्त्व-गणितविद्योद्भिद्विद्याकिमितिविद्या-शारीरस्थान-शारीरविज्ञानजड़विज्ञानाध्यात्मविज्ञानप्रभृतीनि शास्त्राणि कलाश्च आयुर्व्वेदस्य अङ्गप्रत्यङ्गभूतानि भवन्ति। तथाहि—

"एकं शास्त्रमधीयानो न विद्याच्छास्त्रनिश्चयम् ।
तस्माद् बहुश्रुतः शास्त्रं विजानीयात् चिकित्सकः ॥"

तथा "अन्यशास्त्रविषयोपपन्नानामर्थानामिहोपनिपतितानाम् ।
अर्थवशात् तेषां तद्विद्येभ्य एव व्याख्यानमनुश्रोतव्यम् ॥" इत्यादि ।

सुश्रुतसंहितायां सूत्रस्थाने चतुर्थाध्याये ।

६। अस्य तावदायुर्व्वेदशास्त्रस्य व्याख्यातारः प्रचारकाश्च मह-र्षयो भ्रमप्रमादादिकारणभूताभ्यां रजस्तमोभ्यां विमुक्तास्त्रैकालिक-देदीप्यमानज्ञानसम्पन्नाश्च आसन्। तथाहि—

"रजस्तमोभ्यां निर्म्मुक्तास्तपोज्ञानबलेन ये ।
येषां त्रिकालममलं ज्ञानमव्याहतं सदा ॥

---

(१) मनुष्यो हि अस्तु वा बुद्धिमान् विद्वान् अनुसन्धायी वा सततं परीक्षाशीलो वा यावत् दीर्घकालं तपोयोगादीन् नाभ्यसेत् न वा आयत्तीकुर्य्यात् तावत्तस्य मानवसाधारणो-चिता भ्रमप्रमादादयस्तिष्ठेयुरेवेति स्वतःसिद्धम् ।

आप्ता: शिष्टा विबुद्धास्ते तेषां वाक्यमसंशयम्।
सत्यं वदन्ति ते कस्मादसत्यं नीरजस्तमा:॥"

चरकसंहितायां सूत्रस्थाने २४ अध्याये॥

७। तेषां महर्षीणां ज्ञानगोचरा: प्राणिदेहस्थ चेतनाचेतनभूता उपादानपदार्था: तेषामन्योऽन्यसम्बन्धश्च कार्य्यकारणभावश्च इत्यत्र संशयावसरो नास्ति। ते तु आयुर्व्वेदशास्त्रे निर्द्दिष्टवन्त:।

"सर्व्वेषामेव व्याधीनां वातपित्तश्लेष्माण एव मूलम्।"

इति सुश्रुतसंहितायां सूत्रस्थाने २४ अध्याये॥

अस्य तात्पर्य्यार्थ:। प्राणिदेहस्थपदार्थेषु नानाविधेषु बहुसंख्यकेषु च, रोगाणां प्रकारभेदेषु असंख्यप्रायेष्वपि शरीरस्था: त्रय एव पदार्था: सर्व्वेषामेव रोगाणां कारणं भवेत्। नान्य: कश्चित्। तद्यथा, वात: पित्तं श्लेष्मा च इति।

न केवलं सौश्रुतायुर्व्वेदे भगवान् धन्वन्तरिरेवमाह; सर्व्वेऽप्यायुर्व्वेदाभिज्ञा एवमेवाहु:। तथाहि,—

"सर्व्वा एव विकारा निजा नान्यत्र वातपित्तकफेभ्यो निवर्त्तन्ते।"

इति चरकसंहितायां सूत्रस्थाने १९ अध्याये॥

तथा,— "वायु: पित्तं कफ: प्रोक्त: शारीरो दोषसंग्रह:।"

इति तत्रैव १म अध्याये॥

तथा,— "अध्यात्मलोको वातायैर्लोको वातरवीन्दुभि:।
पीड्यते धार्य्यते चैव विकृताविकृतै: स च॥"

इति तत्र चिकित्सितस्थाने २४ अध्याये।

तथाच— "शरीरदूषणात् दोषा मलिनीकरणान्मला:।
धारणात् धातवो ज्ञेया वातपित्तकफास्त्रय:॥"

इति वाग्भट सूत्रस्थाने १ अध्याये।

वाक्यमेतत् महासूत्रत्वेन परिगणयितुं युज्यते। यतो यद्धि वाक्यं सर्व्वकालेषु सर्व्वदेशेषु च, सर्व्वानेव अधिकरोति, अर्थाद्यद्वाक्यम् अतिव्याप्त्यव्याप्तिरहितं तदेव सूत्रनाम्ना गण्यते। विषयगुरुत्वेन सूत्रस्यापि गुरुत्वं महत्त्वञ्च परिगणय्य महासूत्रमितिसंज्ञा युज्यते।

८। अभ्रान्तेषु त्रिकालज्ञेषु च महर्षिषु एतत्सूत्रमात्रं निर्द्दिश्य विरतेष्वपि समुचितं तावदस्माकं प्रमाणम्। परन्तु विषयस्याति-गौरवात् ते तु महर्षयः आयुर्व्वेदशास्त्रेषु अस्य महासिद्धान्तस्य प्रबल-तरहेतुमपि प्रदर्शितवन्तः। तथाहि,—

"तल्लिङ्गत्वात् दृष्टफलत्वात् आगमाच्च।"

( इति सुश्रुतसंहितायां सूत्रस्थाने २४ अध्याये। )

अस्य तात्पर्य्यार्थः। सिद्धान्तस्यास्य त्रीणि प्रमाणानि सन्ति। तद् यथा,—

क। विकृतवातपित्तकफानां प्रत्येकं प्रधानत्वे आतुरदेहे यानि इतेरतानि चिह्नानि प्रकाशन्ते इति आयुर्व्वेदे निर्द्दिष्टम्, पृथिव्याम् सर्व्वदेशेषु सर्व्वकालेषु च, सर्व्वेषामेव जनानां देहेषु सर्व्वरोगेषु च, तेषामन्ततः कियत्संख्यकानि लिङ्गानि प्रकाशन्ते, न कदाप्यन्यथा-भावः इति प्रथमं प्रत्यक्षप्रमाणम्।

ख। आयुर्व्वेदशास्त्रे वातपित्तकफानां प्रशमनार्थं यानि यानि भेषजद्रव्याणि याश्च क्रिया निर्द्दिष्टाः सन्ति, प्रयुक्ताभिस्ताभिरेव सर्व्वकालेषु सर्व्वदेशेषु च, सर्व्वेषां देहस्थसर्व्वरोगेषु च आरोग्यरूपं फलं दृश्यते। अतो वातपित्तकफानामेव सर्व्वरोगकारणत्वं अस-न्देहमनुमीयते, इत्यनुमानप्रमाणं द्वितीयम्।

ग। प्रामाणिकतम-वेदादिवाक्यरूपेष्वागमेष्वपि वातपित्त-कफानां त्रयाणामेव द्रव्याणां सर्व्वरोगकारणत्वं निर्द्दिष्टमस्तीत्याग-मवाक्यस्य वैयर्थ्यासम्भवात् तृतीयं शाब्दप्रमाणमेतत्।

( क्रमशः। )

कविराजः

श्रीईशानचन्द्र विशारद वन्द्योपाध्यायः।

---

# साङ्ख्याभिमत-पदार्थविचारः।

( श्रीयुक्त कालीवर वेदान्तवागीश भट्टाचार्य्य महाशयात् प्राप्तम्। )

आसीत् ब्रह्मसुतः कपिलो नाम महर्षिः। तथाहि—

"सनकश्च सनन्दश्च तृतीयश्च सनातनः।
आसुरिः कपिलश्चैव वोढ़ुः पञ्चशिखस्तथा।
इत्येते ब्रह्मणः पुत्राः सप्त प्रोक्ता महर्षयः॥"

इति गौड़पादाचार्य्यकृतसांख्यकारिकाभाष्यधृतपुराणम्। कपिलस्य सहोत्पन्नानि धर्म्मो ज्ञानं वैराग्यमैश्वर्य्यञ्चेति। एवं स उत्पन्नः सन् अन्धे तमसि निमज्जज्जगदालोक्य संसारपारम्पर्य्येण सत्-कारुण्यो जिज्ञासमानाय आसुरिसगोत्राय ब्राह्मणाय पञ्चविंशति-तत्त्वानां ज्ञानमुक्तवान्। यस्य ज्ञानादात्यन्तिकदुःखक्षयो भवति इति गौड़पाद आह।

अन्ये त्वाहुः

"शक्तकृष्णगतिर्देवो यो बिभर्त्ति हुताशनम्।
अकल्मषः कल्मषाणां कर्त्ता क्रोधाश्रितश्च सः॥
कपिलं परमर्षिञ्च यं प्राहुर्यतयः सदा।
अग्निः स कपिलो नाम सांख्ययोगप्रवर्त्तकः॥"

इति महाभारतोक्तोऽग्नेरवतारः कपिलः सांख्ययोगप्रणेतेति।

कर्द्दमऋषेः पुत्रो देवहूत्यां जातो नारायणावतारः कपिलः सांख्यवक्तेत्यपरे।

अत्र सन्दिह्यते। किं नारायणावतारः सांख्यवक्ता किंवा अग्न्यवतारः कपिल इति। अत्र तु सांख्योपकारिण्यभिधायां संक्षिप्त-सांख्यटीकायामिवं मीमांसितम्। "यथाज्ञानादि क्लेशकर्म्मवासना-समुद्रपतितान् अनाथदीनानुद्दिधीर्षुः परमकृपालुः स्वतःसिद्धज्ञानो नारायणावतारो महर्षिर्भगवान् कपिलो द्वाविंशतिसूत्राण्युपादि-

चत् । सूत्रणात् सूत्रं इति व्युत्पत्तिः । तत एतैः समस्ततत्त्वानां सकलषष्टितन्त्राणां सूचनं भवति । इतश्चेदं सकलसांख्यतीर्थमूलभूतम् । तीर्थान्तराणि चैतत्प्रपञ्चभूतान्येव । सूत्रषड़ध्यायी तु वैश्वानरावतारो भगवत्कपिलप्रणीता । इयन्तु द्वाविंशतिसूत्री, तस्या अपि बीजभूता नारायणावतारमहर्षि भगवत्कपिलप्रणीतेति वृद्धाः ।"

भाष्यकारस्तु विज्ञानभिक्षुराह नारायणावतारेण भगवत् कपिलेन प्रथमं संक्षिप्तसूत्राणि द्वाविंशतिसङ्ख्यकानि निर्म्मितानि तत्त्वसमासाख्यानि, अनन्तरञ्च सांख्यप्रवचनसंज्ञकानि षड़ध्यायी रूपाणि सूत्राणि निर्म्मितानि ।

"ननु तत्त्वसमासाख्यसूत्रैः सहास्याः षड़ध्याय्याः पौनरुक्त्यमिति चेन्न संक्षेप विस्तररूपेणोभयोरप्यपौनरुक्त्यात् । तत्त्वसमासाख्यं हि यत् संक्षिप्तं सांख्यदर्शनं, तस्यैव प्रकर्षेणास्यां निर्व्वचनमिति अतएवास्याः षड़ध्याय्याः सांख्यप्रवचनसंज्ञा सान्वया" इति ।

यो वा स वा भवतु प्रथमवक्ता सांख्यस्य, सोऽत्र न विचारयितव्यः । परं तन्निदर्शितपदार्थानेवात्र यथामति विचारयिष्यामः । अथ सांख्यीयाः पदार्थाः ।

"पुरुषः प्रकृतिर्बुद्धिरहङ्कारो गुणास्त्रयः ।
तन्मात्रमिन्द्रियं भूतं मौलिकार्थाः स्मृता दश ॥
विपर्य्ययः पञ्चविधस्तथोक्ता नव तुष्टयः ।
करणानामसामर्थ्यमष्टाविंशतिधा मतम् ॥
इति षष्टिः पदार्थानामष्टाभिः सह सिद्धिभिः ॥

पुरुष इत्येकः पदार्थः [ १ ] प्रकृतिरित्येकः [ २ ] बुद्धिरित्येकः [ २ ] अहङ्कार इत्येकः [ १ ] गुणा इति त्रयः सत्त्वादिभेदात् [ ३ ] तन्मात्रमित्येकः [ १ ] इन्द्रियमितिएकः [ १ ] भूतमित्येकः [ १ ] एते मिलित्वा दश मौलिका उपादानभूताः । विपर्य्ययः पञ्चविधः [ ५ ] तुष्टयो नव [ ८ ] करणानामिन्द्रियाणां असामर्थ्यं शक्तिं प्रति

वन्धोऽष्टाविंशतिधा अष्टाविंशतिप्रकारः [ २८ ] सिद्धिरष्टधा [ ८ ] मिलित्वा पञ्चाशत्। ता एता मिलित्वा पदार्थानां षष्टिः सांख्या-चार्य्येण कपिलमहर्षिणा अभिहिता इति।

अथात्र प्रथमं तावत् सांख्यपुरुषो विचिन्त्यते। सोऽयं पुरुषः किं स्वरूपश्चेति वीक्षायामाह भगवान् "शरीरादतिरिक्तः पुमानिति" शरीरादि प्रकृत्यन्तं यच्चतुर्विंशतितत्त्वात्मकं वस्तु, ततोऽतिरिक्तः पुमा-निति सूत्रपदानामाक्षरिकोऽर्थः। पुरि शरीरे शेते इति पुरुषशब्द-व्युत्पत्तिः। "पुराणत्वात् पुरि शयनात् पुरोहितवृत्तित्वाच्च पुरुषः।" इत्यनिरुद्धभट्टः। पुरुषस्तावदनादिः सूक्ष्मः सर्व्वगतः चैतन्यो निर्गुणो नित्यो द्रष्टा भोक्ता अकर्त्ता क्षेत्रवित् अमलोऽप्रसवधर्म्मश्च। नास्ति आदिरुत्पत्तिर्यस्य इत्यनादिः, निरवयवद्रव्यत्वे न उत्पत्तिकारणा-भावादित्यवधेयम्। सूक्ष्म इति न परिमाणतः किन्त्वतीन्द्रियतया निरवयवत्वादतीन्द्रियत्वाच्चेत्यप्यनिरुद्धभट्टः। (१) सर्व्वं प्राप्त-मनेन नास्य गमनमस्तीति सर्व्वगतः। व्यापक इति यावत्। चेतय-तीति चेतनः चिती संज्ञाने। सर्व्वजड़व्यावृत्त्या सर्व्वजड़प्रकाशक-त्वाच्चेतन इति संज्ञा। गुणाः सत्त्वरजस्तमांसि न सन्ति अस्मिन्निति निर्गुणः। न किञ्चित् करोति स्वात्मानं विकृतम् इत्यकर्त्ता। चेतन-भावात् भोक्ता, भुनक्ति बुद्ध्यादुपरज्यते इति भोक्तृत्वस्य निर्व्वचनम्। क्षेत्रेषु वुद्धान्तेषु देहेषु गुणगणं वेत्तीति क्षेत्रवित्। नास्ति मलं शुभाशुभं कर्म्म यस्य इत्यमलः। वीजभावात् किञ्चिदपि न प्रसूते उत्पादयतीति अप्रसवधर्म्मः। एवमेव सांख्यपुरुषो व्याख्यातः। अत्र वादिनां यावत्यो विप्रतिपत्तयः सुयस्तास्त्वग्रे अभिधास्यन्ते।

(क्रमशः।)

वेदान्तवागीशोपनाम—

श्रीकालीवर शर्म्मा।

---

(१) अनिरुद्धभट्टः साङ्ख्यवृत्तिटीकाकारः। सांख्यप्रवचनसूत्राणामुपरि अनिरुद्धभट्टस्य या टीका वर्त्तते सा अतीव विशदा॥

# तत्त्वप्रपञ्चः।

( तत्र दुःखाखिलत्वविवेकः। )

श्रुतं व्याख्यातं दुःखम्। शब्दादिविषयबन्धनविगमात् चिराय त्रिविधदुःखनिवृत्तिर्मोक्षोऽपि श्रुतः।

आस्तां तत्। पुरुषे यदि परमार्थतः सुखदुःखं बन्धनं वा विद्येत, तदा बन्धनमोक्षाय सुखदुःखनिवृत्तये च पुरुषकारोऽपि सम्भवेत्। यदि सुखदुःखं बन्धनं वा न विद्येत, तदा बन्धनमोक्षः सुखदुःखनिवृत्तिश्च आकाशकुसुमायते। का पुनः शिरो नास्ति शिरो व्यथेति। शास्त्रन्तु पुरुषस्य निर्दुःखत्वं नित्यमुक्तत्वञ्च घोषयत्युच्चैः। यथा—

"मध्याह्नार्कमरीचिकास्विव पयःपूरं यदज्ञानतः
खं वायुर्ज्वलनं जलं क्षितिरिति त्रैलोक्य मुन्मीलति।
यत्तत्त्वं विदुषां निमीलति पुनः स्रग्भोगिभोगोपमम्
सान्द्रानन्दमुपास्महे तदमलं स्वात्मावबोधं महः॥"

इति प्रबोधचन्द्रोदये।१।१।

"अहं देवो न चान्योऽस्मि ब्रह्मैवाहं न शोकभाक्।
सच्चिदानन्दरूपोऽहं नित्यमुक्तस्वभाववान्॥"

इत्याह्निकाचारतत्त्वे।

"तस्मान्न बध्यतेऽसौ न मुच्यते नापि संसरति कश्चित्।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः॥"

इति सांख्यकारिका॥ ६२॥

"नित्यः सर्व्वगतो नित्यतृप्तो नित्यशुद्ध बुद्ध मुक्तस्वभावो
विज्ञानमानन्दं ब्रह्म॥"

इति शाङ्करब्रह्मसूत्रभाष्यधृतश्रुतिः॥ १।१।४।

अतएव दुःखनिवृत्तिर्न पुरुषार्थः सम्भवति।

स्यादेतत्। अथ श्रुतिस्मृत्यादि प्रमाणेन पुरुषो निर्दुःखः पुरुषो नित्यमुक्तः पुरुषो नित्यानन्दश्च सिद्ध इति। अथ तर्हि कस्यै तद्दुःखम्?

येन आपामरधीरा अपि "अहं दुःखी अहं दुःखी" इति भाषन्ते । नास्ति प्रत्यक्षे कोऽप्यपलाप इति ।

सत्यं दुःखादिकं चित्तस्यैव धर्म्मः न तु पुरुषस्य। कथमिति चेत्, दुःखन्तु तमःपरिणामः (इति रज्जुवन्धने प्रतिपादितम्) तमस्तु त्रयाणां गुणानामन्यतमः। त्रिगुणमयी च प्रकृतिः। इयमेव प्रकृतिः बुद्धिरूपेण परिणमति। बुद्धिरपि त्रिगुणा, सुखं दुःखं मोहश्च बुद्धेरेव धर्म्माः, किन्तु सर्व्वदा न सुखादिकं प्रकाशते, परन्तु शब्दादिविषयसम्बन्धात् सुखादिकं उद्रिक्तं, कथमिति चेत्, त्रिगुणमय प्रकृतिपरिणामत्वात् शब्दादयोऽपि विषयास्त्रिगुणाः, अतएव ते सुखदुःखमोहमयाः। यदा खलु धनादि विषये इन्द्रियाणि सम्बध्नन्ति तदा बुद्धेस्तमोऽभिभवे समुद्रिक्ते च सत्त्वे यस्य धनं तस्य धनादौ स्वामित्वसम्बन्धात् सुखम्, सपत्नस्य विद्वेषसम्बन्धात् दुःखम्, अन्येषां स्वामित्वसम्बन्धाभावात् मोहः समुत्पद्यते। अथ भवतु तत् दुःखं बुद्धिधर्म्मः, तेन दुःखेन पुरुषः कथं मन्यते "अहं दुःखी" इति। सत्यं सम्मुखस्थिताया सुखदुःखमय्या बुद्धेः प्रतिबिम्बपातात् पुरुषो मनुते "अहं दुःखी" इति। यथा धनिकगृहे वातायने स्थापितायाः सौरकरैरुद्भाषितायाः रक्तकाचकपाटिकायाः तद्गतलौहित्यस्य प्रतिबिम्बपातात् वातायनपथे विचरन् मुग्धो बालकः स्वशरीरं रक्तवर्णमेव मन्यते। तथा स्वतः प्रकाशस्य स्वच्छस्य पुरुषस्य सान्निध्यात् प्रकाशमानायाः बुद्धेः स्वगतदुःखस्य प्रतिबिम्बपातात् पुरुषः "अहं दुःखीति" मन्यते। अन्यथा यदि पुरुषे प्रतिबिम्बरूपेणापि दुःखादिकं न पतेत्, तदा पुरुषस्य भोक्तृत्वं दुःखादीनां भोग्यत्वञ्च न सम्भवेत्। भोगस्तु सुखदुःखादीनां ग्रहणं। ग्रहणञ्च तत्तदाकारता, तत्तदाकारता च परिणमनशीलाया बुद्धेरेव सम्भवेत्, न तु पुरुषस्य, कुत इति चेत्, पुरुषोऽसङ्गः कूटस्थः अपरिणामी च, अतएव यदि

पुरुषोऽपि बुद्धिवत् परिणमेत, तदा तस्य कूटस्थत्वव्याघातः स्यात्। अतः पुरुषस्यापरिणामित्वरूपकूटस्थत्वरक्षायै अथच सुखदुःखादि भोक्तृत्वोपपत्तये च अगत्या पुरुषे बुद्धिवृत्तिदुःखादिप्रतिबिम्बः स्वीक्रियते। प्रतिबिम्बरूपेण दुःखादेर्ग्रहणेन स्वामित्वं प्रतिपद्यते पुरुषः। यथा अन्नादिकं धनादिकं वा अगृह्णन् स्वामित्वं न जायेत, नो चेत् स्वामित्वं जायेत, तदा पुरुषोऽन्नादिकं धनादिकं वा नोपभुञ्जीत, सुतरां अभुञ्जानस्य भोक्तृत्वं नोपपद्यते इति।

अत्र च भोगे इन्द्रियाणि करणम्। तैः पुरुषः भोग्यं भुङ्क्ते, यथा राजा भृत्यवर्गेण भोग्यं स्वायत्तीकरोति, भोगश्च आत्मसात् करणम्।

तथा च योगवार्त्तिकधृत विष्णुपुराणम् ।४।

"गृहीतानीन्द्रियैरर्थानात्मने यः प्रयच्छति।
अन्तःकरणरूपाय तस्मै विश्वात्मने नमः॥"

यथा च सांख्यप्रवचनभाष्ये स्मृतिः। १।

"तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः॥"

अयञ्च पुरुषे बुद्धिवृत्तिप्रतिबिम्बप्रकारः "वृत्तिसारूप्यमितरत्र" इति पातञ्जलभाष्ये व्यासदेवेन, वार्त्तिककृता विज्ञानभिक्षुणा च "तच्च चिदवसानोभोग" इति १।१०४ सांख्यसूत्रे च विशिष्य दर्शितः।

तानि च दुःखानि पुरुषे त्रिविधानि आध्यात्मिकमाधिभौतिकमाधिदैविकञ्च। शारीरमानसदुःखयोराध्यात्मिके निवेशः। आधिभौतिकं पशुपक्ष्यादिजनितम्। आधिदैविकं ग्रहभूतादिजनितम्। एतच्च सांख्यदर्शन स्थूलार्थे विस्तरशः प्रपञ्चितम्।

यद्यपि दुःखादिकं क्षणिकं, द्वितीयक्षणादुपरि दुःखं स्वयमेव नङ्क्ष्यति; न कदापि किमपि सुखं वा दुःखं वा धारावाहिकं निरन्तरं तिष्ठति। यथा—

कश्चित् प्रियविरहकातरः पुरुषः तद्विरहजं दुःखमनुभवन्,

पुनर्यदा वीणारवं खरस्वरं वा शृणोति, तस्मिन् क्षणे तत् दुःखं तिरोभवति। पुनः तदनन्तरं यदि सुन्दरं कुत्सितं वा किमपि रूपं पश्यन् तस्मिन् सूक्ष्मे क्षणे वीणारव खरस्वरज्ञानजं सुखं दुःखं वा विनश्यति। तस्मादपि चक्षुर्यद्याकर्षति तदा पुनः प्रियविरहदुःखमुदेति। एवं शब्दस्पर्शरूपरसगन्धजनितं सुखं दुःखं वा क्रमश एव उदेति अस्तमेति च अतएव सुखदुःखादिकं क्षणिकम्।

किन्तु अतीव सूक्ष्मक्षणे परिवर्त्तनशीलानां दुःखादीनां क्षणिकत्वं नानुभवपथमधिरोहति। यथा कश्चित् ज्वररोगी सितशर्करामत्स्यण्डीमिश्रितौषधपानसमये माधुर्य्यसुखं ज्वरदुःखञ्च युगपदिव भावयति, परन्तु न तथा, किन्तु यदा माधुर्य्यसुखमनुभवति, तदा न रोगदुःखम्, यदा तु रोगदुःखमनुभवति, तदा न माधुर्य्यसुखम्। एवमेव क्षणसूक्ष्मांशस्य सहस्रधा विभागो जायते, तन्निर्द्दे ष्टुं अनुमातुं वा न शक्यते। यथा—उपर्य्युपरिस्थापितं सहस्रकमलपत्रं एकेन अनुपलेन समयेन तीक्ष्णलौहशलाकया विध्यते। किन्तु मन्यते लोकैः, युगपदेव सहस्रं कमलपत्रं विद्धम्, परन्तु न युगपत्, किन्तु प्रथमपत्रात् परं द्वितीयं पत्रम्, द्वितीयपत्रात् परं तृतीयपत्रम्, तृतीयपत्रात् परं चतुर्थं पत्रम् विद्धम्, एवं क्रमेण सहस्रपत्रं विध्यते, सुतरां निमेषार्द्धोऽपि कालः क्रियया सहस्रधा विभक्तः सूक्ष्मात् सूक्ष्मतरः सन् अनुभवपथमतिक्रामति। तत्र निमेषार्द्धक्षणस्य सहस्रधा विभागः युक्तिसिद्धोऽपि विशिष्य निर्द्दे ष्टुं न शक्यते। एवमेव दुःखादिकमपि निमेषार्द्धेऽपि वहुश उत्पद्यते विपद्यते च। अत एव दुःखादिकं क्षणिकम्।

यथा च लोकेन मन्यते उन्मुक्तत्वचं दीर्घलमिक्षुदण्डं चर्व्वन् चर्व्वणक्षण एव युगपत् "चप् चप्" शब्दः श्रूयते, काठिन्यः शीतलश्च स्पर्शः स्पृश्यते, धावल्यञ्च रूपं दृश्यते, माधुर्य्यश्च रसः स्वाद्यते, सुगन्धश्चाघ्रायते। फलतस्तु नैव युगपत् शब्दादि ज्ञानं जायते, परन्तु सूक्ष्मक्षण व्यवहित एव शब्दादि ज्ञानमुत्पद्यते। (क्रमशः।)

## प्रवेशिकाप्रश्नास्तदुत्तरादर्शाश्च ।

अनेके बालका पठितग्रन्थे शिक्षिता अपि लेखनप्रणालीमजानन्त: प्रश्नोत्तरे फलैर्व्वियुज्यन्ते, अतएव प्रश्नास्तदुत्तरलेखनादर्शाश्चात्र निवेश्यन्ते। क्रमशस्तु मुम्बयीमद्रराजप्रभृतिविभागानामपि प्रवेशिकाप्रश्नास्तदुत्तरादर्शाश्च प्रकाशयिष्यन्ते।

---

## ENTRANCE EXAMINATION, 1893.

### SANSKRIT.

*The figures in the margin indicate full marks.*

1. (*a*) एवं सम्प्रधार्य्य भूयोऽप्यचिन्तयत् यदहमनशनं कृत्वा प्राणानुत्सृजामि ।

(*b*) अथ सा सुतवत्सला ब्राह्मणी स्वदारकवत् तमपि नकुलशिशुं स्तनप्रदानादिना पुपोष ।

(*c*) परं यदा रामो राजासीत् तदाहं सिद्धिवर्त्तिमादायानेन पथा समायात: ।

(*d*) अतिक्लेशपरम्परैषा राज्यस्थितिर्न कदाचिदपि सुखं प्रयच्छति ।

(*e*) अथ तेन वृद्धवानरेण भ्रमता पद्मिनीषण्डमण्डितं सर: सादितम् ।

(1) Translate the above extracts into English. 15

(2) Expound the *samasa* in स्तन्यदानादिना, अतिक्लेशपरम्परा, and सुतवत्सला 5

(4) In what case is पथा in extract (*c*) ? 1

(5) In what case is सुखम् in extract (*d*) ? 1

(6) By whom were the words in extract (d) spoken? What was the occasion that led to this speech? 2

*Answer.*

(1) (*a*) Resolving thus he again thought "I should give up my life by fasting."

(*b*) Then the wife of the Bramhin, affectionate to her children, tended that young ? chnewmon also, like her own child by such acts as suckling it from her breast &c.

(*c*) But when Rama was the (reigning) king, then taking the torch of success I came by this way.

(*d*) This Government of a kingdom, involving as it does a series of severe hardships, never gives happiness.

(*e*) Then by that old monkey, as he was travelling, was discovered a tank beautified with clusters of lotuses.

(2) स्तन्यस्य दानं स्तन्यदानं (६ तत्) तदादिर्यस्य तत् स्तन्यदानादि (वहु) तेन स्तन्यदानादिना ।

अतिशयिता: क्लेशा: अतिक्लेशा: (नित्य समास:) अतिक्लेशानां परम्परा यत्र सा तथोक्ता ( वहु ) तस्य । सुते वत्सला सुतवत्सला ( ७ तत् ) ।

(4) पथा इत्यत्र करणे तृतीया ।

(5) सुखमिति प्रयच्छतीत्यस्य कर्मपदम् ।

(6) प्रीत वेतालसकाशान्नापितेन राज्यप्रार्थनायोपदिष्टं स्वभर्त्तारं प्रति कौलिकपत्न्या उक्तिरियम् । चतुर्भुजो भवतु पतिरिति स्वाभिलाषं पूरयितुं सेदमब्रवीत् ।

( क्रमश: । )

# TRANSLATION.

## VISHNU SAMHITA.

### CHAPTER XXXI.

विष्णुसंहिता स्मृतिशास्त्रम्।

---

एकसप्ततितमोऽध्याय:।

अथ न कञ्चनावमन्येत। (१) न च हीनाङ्गाधिकाङ्गमूर्खान् धनहीनानवहसेत्। (२) न हीनान् सेवेत। (३) स्वाध्याय विरोधि कर्म्म नाचरेत्। (४) वयोऽनुरूपं वेशं कुर्य्यात्। (५) श्रुतस्याभिजनस्य धनस्य देशस्य च। (६) १।

नोद्धत:। (७) नित्यं शास्त्रावेची स्यात्। (८) सति विभवे न जीर्णमलवद्वासा स्यात्। (९) नादित्यमुद्यन्तमीक्षेत। (११) नास्तं यान्तम्। (१२) न वाससा तिरोहितम्। (१३) न चादर्शजलमध्यगतम्। (१४) न मध्याह्ने। (१५) न क्रुद्धस्य गुरोर्मुखम्। (१६) न तैलोदकयो: स्वच्छायाम्। (१७) न मलवत्यादर्शे। (१८) न पत्नीं भोजन समये। (१९) न स्त्रियं नग्नाम्। (२०) नामेध्यमग्नौ क्षिपेत्। (२१) नासृक्। (२२) न विषम्। (२३) नाप्स्वपि। (२४) नाग्निं लङ्घयेत्। (२५)

---

1. One should not shew disrespect to any one: (2) not laugh at the poor, the ignorant and persons who are either deficient in a limb or have a limb in excess. (3) One should not serve mean and contemptible persons. (4) One should not do any thing which is opposed to the precepts of the Vedas. (5-6) One should dress as befits one's years, learning, family, means and (the fashion of) his country. (7) One should not be haughty and arrogant. (8) One should always respect the Sastras in his dealings. (9) No one, if he has the means, should put on worn out and dirty clothing. (11-15) One should not look at the sun when rising or setting, through the medium of a cloth, reflected either in a glass or water, or when it is midday. (16) One should not look his preceptor in the face when he is angry. (17-18) One should not see his face reflected on oil, water or a dirty glass. (19) One should not look at his wife when she is eating. (20) Or any woman when she is naked. (21,22,23,) One should not throw blood, poison or any thing impure in to the fire. (24) Neither should one throw any thing impure into the water. (25) One should not cross a fire. (क्रमश:।)

श्रीराजेन्द्रचन्द्र शास्त्री।

छात्रैर्देयं वार्षिकं मूल्यमेकरूप्यकम् (१)। तदन्यैर्ग्राहकैः सार्द्धैकरूप्यकम् (१॥०)।

प्रथम खण्डस्य ] १८१५ शाकाषाढ़मासस्य [तृतीय संख्या।

# संस्कृतचन्द्रिका।

## मासिकपत्रिका।

दोषच्युतश्चात हि शोषणीयं, दयारसं साधु सदाभिषिच्य।
सतां पदे तत् प्रचते न धूर्त्तं, किं मक्षिका तत्त्रजति स्रुताङ्गी॥

श्रीजयचन्द्रसिद्धान्तभूषणेन सम्पादिता।

| विषयाः | पत्राङ्कम्। |
|---|---|


कलिकाताराजधान्यां

आहिरीटोला वाबुरामघोषलेनस्थ ९ संख्यक भवनात्

श्रीहरिदासमित्रेण प्रकाशिता।

६९ नं गनफाउण्डारि रोड, काशीपुर हर्टिकलचार प्रेसे

श्रीभवतारण चट्टोपाध्यायेन च मुद्रिता।

संवत् १९५०।

## शुद्धिपत्रम्। ज्यैष्ठमासस्य पत्रिकायाः।

| अशुद्धम्। | | | | शुद्धम्। | पृष्ठा। | पंक्तिः। |
|---|---|---|---|---|---|---|
| कमपि | ... | ... | ... | किमपि | २७ | ११ |
| कुशराशौ | ... | ... | ... | कुशरासौ | ३१ | १८ |
| भूपतिः | ... | ... | ... | भूतपतिः | ३८ | ५ |
| १मः | ... | ... | ... | १मं | ४२ | २१ |
| ईशन्ते | ... | ... | ... | ईशते | ४८ | ४ |

श्रीश्रीदुर्गा ।

शरणम् ।

# संस्कृतचन्द्रिका ।

श्रीगणेशाय नमः ।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव ।
मायावलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

## उद्भट-श्लोकाः ।

"बालक्रीड़ाभिलाषस्तु करनिष्पाततताड़नैः ।
आश्वासयति गोविन्दः कंसभीतां वसुन्धराम् ॥"

"क्षीरसारमपहृत्य शङ्कया स्वीकृतं यदि पलायनं त्वया ।
मानसे मम नितान्ततामसे नन्दनन्दन ! कथं न लीयसे ॥"

"पथि धावन्निह पतितो रोदिष्यम्बाकरावलम्बाय ।
पतितोद्धारणसमये किमात्मानं न स्मरसि ॥"

"आद्यन्तमध्यरहितं दशाहीनं पुरातनम् ।
अद्वितीयमहं वन्दे मदवस्त्रसदृशं हरिम् ॥"

"गृहपतिराद्यप्रणयी तदनु च हरिः किं करोमि राधे ! ।
शृणु सखि ! पाणिनिसूत्रं विप्रतिषेधे परं कार्य्यम् ॥"

"उभयोः प्रकृतिस्त्वेका प्रत्ययभेदाद्विभिन्नवद्भाति ।
कलयति कश्चिन्मूढ़ो हरिहरभेदं विना शास्त्रम् ॥"

"उत्पाद्य यादवकुलं स्वयमेव हंसि
प्राणाधिकां जनकजां विपिने जहासि ।
सर्व्वंस्वदं वलिमधो नयसिच्छलेन ।
कस्त्वां स्मरेद्यदि च कालभयं न च स्यात् ॥"

# कृतज्ञता। (१)

अयि तरुशाखे ! भवती कृतज्ञा, त्वां प्रणमामि। तरुमूलन्तु पृथिव्याः समाकृष्य रसम् भवतीं प्रति प्रेरयति पोषयति च। तथा भवत्यपि प्रतिस्रोतोरूपेण रसेन तरुमूलं स्नेहयसि, तरुमूलकृतस्योपकारस्य स्मरसीव।

अयि नदि ! कृतज्ञे ! त्वामपि प्रणमामि। सागरस्त्वां परिपूरयति, त्वमपि सागरमनुवहसि प्रत्यर्पयसि च जीवनम्।

कथमेवमाचरति तरुशाखा नदी च इति किं ज्ञायते विद्यार्थिभिः ? उपकारिणः प्रत्युपकारं विधाय स्वयमानन्दमनुभवितुं कृतज्ञो जन एवमाचरति अत्रापि।

कृतज्ञो हि उपकारिणं स्निह्यति, सम्मन्यते, तदधीनश्च भवति। यदिवा उपकर्त्तुः प्रत्युपकर्त्तुं कृतज्ञो न समर्थो भवेत् तथापि चिराय तत् सास्मर्य्यते।

अतएव कदापि उपकर्त्तारं नापकुर्य्यात् तत्कृतमुपकारं न विस्मरेत्, नवा प्रच्छादयेत्, तेन हि उपकर्त्ता च अन्ये च ईश्वरश्च प्रीणन्ति।

किन्तु वृथागर्व्वितादुपकारं न गृह्णीयात्, यदि गृह्णीयात्, तदा अपमानं पश्चात्तापमपि सोढ़ुं शिक्षेत। यतस्तदुभयमदूरवर्त्ति।

आसीत् सत्ययुगे नलो नाम परमधार्म्मिको राजा, तस्य भार्य्या अनुपमरूपा सती दमयन्ती नाम। इन्द्रादिदेवान् परित्यज्य नलमेव पतिं वृतवती, तस्मात् नलं प्रति दुर्वृत्तः कलिरीर्षावशो बभूव। प्रविवेश च पादयोरधावनात् भ्रात्रा समं अच्छलेन नलशरीरम्। तेन च नलो राजा द्यूते पराभावितः सह जायया राज्यात् प्रच्यावितः

(१) कृतमुपकारं जानाति कालान्तरेऽपि स्मरति। ज्ञा + कः। तस्य भावः। तल्। टाप्।

वने निर्व्वासितः जायया च वियोजितः शरीरे च कुष्ठग्रस्तवत् विवर्णीकृतः।

अथ कदाचित् नलो राजा महारण्ये विचरन् "हा हतोऽस्मि हा दग्धोस्मि" इत्येवं रवमश्रौषीत्, उपस्थित च तत्र, अद्राक्षीच्च तत्र दावानलवेष्टितं निर्गन्तुमसमर्थं कर्क्कोटकं नागम्।

अथ सहजदयालुर्नलः अविगणय्यानलज्वालां दावानलात् तं कर्क्कोटकं उदहार्षीत्। ततश्च कर्क्कोटकोऽचिन्तयत् यदस्य महोपकारिणः कोऽपि प्रत्युपकारो मयावश्यं कर्त्तव्यः, इति मत्वा स राजानमाह भो महाभाग! सुष्ठु ते शरीरगठनम् सौभाग्यव्यञ्जकञ्च, केन पुना रोगेण वर्णविपर्य्ययो जातः? राजा कथयति भो नाग! शरीरे कलिप्रवेशात् विकृतवर्णोऽस्मि।

तच्छ्रुत्वा न भेतव्यं श्रीमता इत्युक्त्वा कर्क्कोटकः नलराजस्य पादे अदाङ्क्षीत्,तस्य च हलाहलज्वालया समवलीढ़ः कलिर्नलकलेवरे वस्तु मशक्नुवानो निरगमत्। तेन दुर्व्वर्णरोगश्च चिकित्सितोऽभूत्॥

अतएव यस्तु मानवोऽकृतज्ञः स पशुभ्योऽपि निकृष्टतरः॥

---

## शत्रुसंकीर्णे कथं वस्तव्यम्।

नीतिशास्त्रतत्त्वार्थं जिज्ञासुः कश्चित् शिष्यः कदाचित् सुरगुरुमुपसृत्याह। गुरो! पृच्छामि तत्रभवन्तं संदिग्धमनाः, कथं प्रबलैर्बहुभिः शत्रुभिः परिवृतेनासहायेन स्थातव्यमिति। विवदेत चेत् तैः सह तदा प्राणहानिर्भवेदेव, अकृतेऽपि विवादे बलवन्तो निरपराधिनमपि दुर्व्वलन्तमभिभवितुमिच्छन्ति, अतः का गतिरबलस्य जन्तोः प्रबलशत्रुमध्यमधिवसतः।

श्रुत्वैवं शिष्यवाक्यं परमकारुणिको गुरुः प्रहस्याह। वत्स! कौतूहलञ्चेत् नीतिशास्त्ररहस्यश्रवणे तच्छ्रूयतां मार्ज्जार मूषिकसंवादः।

अस्ति कस्मिंश्चित् महारण्ये महानेको वटविटपी, तस्य मूल-देशे विधाय च सर्व्वतोमुखं विलं कश्चित् प्राज्ञो मूषिकः प्रतिवसति। तस्य शाखान्तरे एको वन्यमार्ज्जारोऽपि पक्षिशावकभोजी निवसति। कदाचित् एको व्याध इतस्ततः परिभ्रमन् वन्यजन्तुजिघांसया तत्रा-गमत्। स च प्रतिरात्रं न्यग्रोधतले पाशान् यथावत् प्रयोज्य याति। पुनस्तत्रागत्य निहत्य च जालबद्धान् मृगानतिसन्तुष्टमनाः स्वस्थानं प्रतिनिवर्त्तते।

अथ कदाचित् स मार्ज्जारः पक्षिशावकान् भक्षयितुमितस्ततो धावन्, जीवहिंसासहिष्णुना दैवेन पातित इव तस्मिन् जाले दृढ़-तरं निबद्धः। अथ स मूषिकस्तमाततायिनं स्नायुपाशेन दृढ़बद्धमव-लोक्य हृष्टान्तरात्मा निर्भय इतस्ततो विचरितुमारेभे। सुविश्वस्त-चित्ततया विलात् दूरतरं गते च तस्मिन् मूषिकगन्धमाघ्रायैको नकुलस्तं व्यापादयितुं सहसा तत्रागत्य उपस्थितः। मूषिकस्तु तथाविपन्नः विलप्रवेशञ्च तदा सुदुष्करमवगम्य प्रत्युत्पन्नमतिस्तत्-क्षणात् वृक्षशाखामारुरोह। आरूढ़श्च स एकेन तीक्ष्णतुण्डेनोलूकेन दृष्टः। स तदा वृक्षतले नकुलं वृक्षोपरि च उलूकमवलोक्य चिन्तयामास।

अहो मे दुर्दैवम्! प्रबलशत्रुभिः परिवृतोऽहमधुना किं करोमि कुत्र वा यामि, न जानेऽद्य कथं मे प्राणरक्षा भविष्यति। यद्यह-मधुना विलं प्रवेष्टुं भूमिमवतरामि तदा नकुलो मां भक्षयिष्यति, इह तिष्ठन्तञ्च उलूको हनिष्यति। अथवा मम भाग्यविप्लवात् यदि मार्ज्जारोऽपि केनचिदुपायेन पाशमुक्तो भवेत् तदा मे प्राणहानिर-वश्यं भविष्यति। तद्यावत् जीवामि तावत् कञ्चिदुपायं करोमि।

तथाचोक्तम्—

"तावद्भयस्य भेतव्यं यावद्भयमनागतम्।
आगतन्तु भयं वीक्ष्य प्रतिकुर्य्याद् यथोचितम्॥"

नाहमधुना मार्ज्जारादन्यां गतिं पश्यामि। प्रबलः शत्रुरपि साम्प्रतमयं विषमस्थो वर्त्तते, तद्यदि नीतिबुद्ध्यानेन सङ्गतो भवितुमर्हामि ततो मे कार्य्यसिद्धिर्भवेदेव। अयमपि ईदृशव्यसनगतो मया सह सन्धिं कुर्य्यात्। विषमे समुपस्थिते शत्रुणापि सन्धिः कर्त्तव्य इत्याहुर्नीतिशास्त्रवादिनः। विचिन्त्यैवं मूषिकः शनैः शनैर्म्मार्ज्जारमुपगम्य सान्त्वपूर्व्वमिदमुक्तवान्। सौम्य! सौहार्द्देनाभिभाषे, समुपस्थितायामस्यां विपदि भवता भयं न कर्त्तव्यम्। यदि भवान् मां न जिघांसति तदाहं त्वामुद्धरिष्यामि। अस्ति कश्चिदुपायोऽत्र येन त्वया मया च श्रेयः प्राप्स्यते। भवानिव अहमप्यधुना विपज्जालनिबद्धः। यद्यहमिच्छामि तदा भवन्तमुद्धर्त्तुं शक्नोमि। त्वमपि वाञ्छसि चेत् तदा मां निर्विपदं विधातुं शक्नोषि। भूम्यामितस्ततो विद्रवन् नकुलो वृक्षशाखायाञ्चपलनयनः कौशिकश्च मां पापबुद्ध्या विलोकयति। ततस्ताभ्यामहं भृशं बिभेमि।

मार्ज्जारस्तु मूषिकस्य तादृशं हेतुमद्वचनमाकर्ण्य सानन्दमुक्तवान्। सौम्य! यो विपदि सहायो भवति स एव परमसुहृत्। यद्भवताभिहितं तत् सत्यमेवास्माकं हितकरम्। तदधुना कालविलम्बेनालम्। शीघ्रमेव पाशान् छित्वा मां मोचय। इतः परं अहमपि सदा भवन्तं मित्रदृशा द्रक्ष्यामि। शङ्कटादस्माद्विमोचितोऽहं भवतः प्रत्युपकारं करिष्यन्नपि सम्यक् ऋणमुक्तो न भविष्यामि।

तथाचोक्तम्—

"प्रत्युपकुर्व्वन् बह्वपि न भवति पूर्व्वोपकारिणा तुल्यः।
एकः करोति कृते निष्कारणमेव कुरुतेऽन्यः॥"

एवमभिहिते मार्ज्जारे सुविश्वस्तान्तःकरणो मूषिको द्रुतपदेन तस्य काशमुपागतः। नकुलोलूकौ तु अभूतपूर्व्वं तदवलोक्य ज्ञात्वा च तयोः परमां प्रीतिं मार्ज्जारभीत्या मूषिकभक्षणे निराशौ स्वं स्वमालयं गतवन्तौ प्रतिनिवृत्तयोश्च तयोर्द्देशकालवित्, मूषिकः शनैर्मार्ज्जारस्य

पाशान् चिच्छेद। ततो मार्ज्जारो वृक्षाग्रं मूषिकोऽपि तन्मूलविलमा-श्रिश्राय। व्याधोऽपि विघ्नस्थानमेतदिति गृहीतजालादिः प्रस्थितः।

अथैकदा पादपाग्रे सुखोपविष्टो मार्ज्जारो विलस्थितं मूषिक-मामन्त्र्याह। बन्धो! साम्प्रतं स्थानमेतत् निरामयं जातम्, तत् कथमधुना न वयं मिलित्वा सौहार्द्दसुखमनुभवामः। सखे! पूर्व्ववदागच्छ मत्समीपम् सबान्धवोऽहं भवन्तं पूजयिष्यामीति। तदाकर्ण्य मूषिकराजः सान्त्वपूर्व्वमाह। मित्र! यद्‌ब्रवीषि तत् सर्व्वमेव सत्यम्। परन्तु भक्ष्यभक्षकयोः प्रीतिः कदापि श्रेयसे न भवतीति विचिन्तयामि। सौहार्द्दं शत्रुता च कार्य्यत एव जायते नश्यति च। तद्बिभेमि यदि कालविपर्य्ययात् कदापि कस्यापि चित्तग्लानिर्जायेत ? तदा मे महाननर्थो भवेत्। त्वं हि मे जातितः शत्रुरपि सम्प्रति कार्य्यवशात् सुहृद्‌भूतः। तच्च कृत्यमधुना निर्वृत्तम्। तस्मादवगच्छासि प्राक्तनशत्रुतावसर एव पुनः संवृत्तः। यः पुनरस्माकं सन्धिर्जातः स चिरं न स्थास्यतीति मन्यामहे। तथाचोक्तम्।

"शत्रुणा नहि संदध्यात् सुश्लिष्टेनापि सन्धिना।
सुतप्तमपि पानीयं शमयत्येव पावकम्॥"

अतः पुनर्भवता संगन्तुं नाभिलषामि। प्रार्थये जगदीश्वरं सपरिवारो भवान् सुखं निवसतादिति। एवमुक्त्वैव मूषिकः द्रुत-पदं स्थानान्तरं प्रचलितः। मार्ज्जारोऽपि तस्य बुद्धिप्राखर्य्यं संस्तुवन् तत्रैव सुखेनावस्थितः।

वत्स! श्रुतो भवता मार्जारमूषिकसंवादः, विज्ञातञ्च शत्रुमध्य-मधिवसतो दुर्बलस्य कर्त्तव्यम्। सर्वदास्मिन् संसारे चिरसुखं प्रेप्सुना देशकालानुसारतो नीतिबुद्धिरवलम्बनीया। यो हि सदा भीतोऽप्यभीतवदविश्वस्तोऽपि विश्वस्तवदप्रमत्तस्तिष्ठति, स एव शत्रूणां शत्रुश्चिरमवस्थातुं शक्नोति।

श्रीनन्दलाल विद्याविनोदः।

# भूगोलविवरणम्।

(महामहोपाध्याय श्रीयुक्त कृष्णनाथ न्यायपञ्चानन भट्टाचार्य्य महाशयात् प्राप्तम्।)

ये खल्वधुना धीमन्त एवमवधारयन्ति यत् पृथिव्या गोलतादिकमिंलण्डीयपण्डितै रेवाविष्कृतं नायमस्मद्देशीय पण्डितानां सिद्धान्त इति। तेषां तदवधारणापाकरणाय सिद्धान्तशिरोमणित उद्धृत्य कतिपयश्लोका व्याख्यायन्ते। तत्र भूमेः स्वरूपं तदधिष्ठानञ्चाह।

भूमेः पिण्डः शशाङ्क-ज्ञ-कविरविकुजेज्यार्किनक्षत्रकक्षा
वृत्तैर्वृत्तो वृतः सन् मृदनिलसलिलव्योमतेजोमयोऽयम्।
नान्याधारः स्वशक्त्या वियति च नियतं तिष्ठतीहास्य पृष्ठे
निष्ठं विश्वञ्च शश्वत् सदनुजमनुजादित्यदैत्यं समन्तात्॥

मृदनिलसलिलव्योमतेजोमयः क्षित्यादिपञ्चभूतात्मकः वृत्तो गोलाकारो ऽयं भूमेः पिण्डः शशाङ्कज्ञकविरविकुजेज्यार्कीणां चन्द्रबुधशुक्ररविमङ्गलगुरुशनैश्चराणामुपर्य्युपरिस्थितानां याः कक्षाः भ्रमणमार्गास्तद्रूपाणि यानि वृत्तानि तैर्वृतः परिवृतः तथा नान्याधार आधारान्तररहितः सन् स्वशक्त्या वियति व्योम्नि नियतं तिष्ठति। अस्य भूपिण्डस्य इह पृष्ठे समन्तात् सर्व्वासु दिक्षु दनुजमनुजादिभिः सह वर्त्तमानं विश्वं शश्वत् पुनः पुनर्निष्ठं स्थितम्। शश्वदित्यनेन खण्डप्रलयात् खण्डप्रलयात् परं पुनर्व्वर्त्तत इति दर्शितं एतेन भूपिण्डस्य गोलत्वं आकाशमात्राधारत्वं तस्य सर्व्वासु दिक्षु लोकावस्थानञ्च प्रतिपादितम्।

अत्र सर्व्वासु दिक्षु यल्लोकावस्थानं प्रतिपादितं तत्र दृष्टान्तमाह।

सर्व्वतः पर्व्वतारामग्रामचैत्यादिभिश्चितः।
कदम्बकुसुमग्रन्थिः केशरप्रकरैरिव॥

स भूपिण्डः सर्व्वतः सर्वासु दिक्षु, पर्वतारामग्रामचैत्यादिभिश्चितो व्याप्तः। क इवेत्यत्राह कदम्बेति। यथा कदम्बकुसुमस्य ग्रन्थिः केशराधारभूतः केशरप्रकरैः केशरसमूहैश्चितस्तद्वत्। एतेन निम्नपृष्ठे पार्श्वद्वये च लोकावस्थानं स्पष्टमेव दर्शितम्।

पुराणेषु भूमेराधारपरम्परा या वर्णिता ज्योतिर्विदस्तामपि नाङ्गीकुर्वन्ति। अतोऽसौ तामाधारपरम्परां निराकरोति।

मूर्त्तो धर्त्ता चेद्धरित्र्यास्तदन्य-
स्तस्याप्यन्योऽप्येवमत्रानवस्था।
अन्त्ये कल्प्या चेत् स्वशक्तिः किमाद्ये
किन्नो भूमिः साष्टमूर्त्तेश्च मूर्त्तिः॥

चेत् यदि धरित्र्याः पृथिव्या मूर्त्तो मूर्त्तिमान् धर्त्ता धारणकर्त्ता स्यात् तदा तस्य निराधारत्वासम्भवात् तदन्यस्तस्यान्यो धर्त्ता कल्प्यः स्यात्। तस्यापि निराधारत्वासम्भवात् तस्यापि अन्यो धर्त्ता कल्पनीयः स्यात्। एवंरीत्या अत्र आधारकल्पनायां अनवस्था अविश्रान्तिरापद्यते।

अथोच्यते आधारपरम्परायां यश्चरमः स स्वशक्त्यैव वर्त्तत इति। अत्र दूषणमुपन्यस्यति अन्त्ये कल्प्येति। अन्त्ये चरमाधारे स्वशक्तिः कल्प्या चेत् तर्हि आद्ये भूपिण्डरूपे स्वशक्तिकल्पनायां किं दूषणम्। तथाच बहून् आधारान् परिकल्प्यापि यदन्ते स्वशक्तिः कल्पनीया तदा आधेयभूते भूपिण्ड एव प्रथमे स्वशक्तिः कल्प्यतां अलमाधारान्तरकल्पनया, गौरवादिति भावः। ननु पुराणोक्ताधारपरम्पराचरमे अनन्ताख्यः स च विष्णुमूर्त्तिस्तस्य स्वशक्त्या निरालम्बनभावेनाकाशावस्थानं सुघटम्। अचेतनभूपिण्डस्य तन्न सम्भवतीति चेत् तत्राह किन्नो इति। सा भूमिः किमष्टमूर्त्तेः शिवस्य मूर्त्तिर्नो भवति। तथाच यदि दैवबलेनैव स्वशक्तिरङ्गीक्रियते तर्हि अनन्तस्य विष्णुमूर्त्तित्ववत् भूमेरपि शिवमूर्त्तित्वस्य शास्त्रीयत्वात् भूमावपि स्वशक्तिः सुलभेति भावः।

वस्तुतो वस्तुशक्तिर्न दैवबलमपेपक्षते तस्याः स्वभावतोवैचित्र्यादित्याह।

यथोष्णतार्कानलयोश्च शीतता
विधौ द्रुतिः के कठिनत्वमश्मनि॥
मरुच्चलो भूरचला स्वभावतो
यतो विचित्राः खलु वस्तुशक्तयः॥

अर्कानलयोः सूर्य्ये वह्नौ च उष्णता। तद्वैपरीत्यं दर्शयति। विधौ चन्द्रे शीतता। के जले द्रुतिर्द्रवत्वं। वैपरीत्यमाह। अश्मनि प्रस्तरे कठिनत्वम्। मरुद्वायुश्चलो गतिशीलः। एतत् सर्व्वं यथा स्वभावत एव न दैवबलात्। तद्वत् भू भूमिरपि स्वभावत एव अचला न दैवबलसापेक्षा। कुत एषामेवं स्वभावता इत्यत्राह— यतो यस्मात् वस्तूनां शक्तयो विचित्राः। तथाच तत्तद्वस्तुसृष्टिदशायाम् ब्रह्मणैव तत्र तत्र तथाविधा शक्तिर्दत्तेति भावः। अतएव सूर्य्यसिद्धान्तेऽभिहितम्।

मध्ये समन्तादण्डस्य भूगोलो व्योम्नि तिष्ठति।
बिभ्राणः परमां शक्तिं ब्रह्मणो धारणात्मिकाम्॥ इति॥

भूमेः स्वाभाविकं शक्त्यन्तरमपि दर्शयति।

आकृष्टिशक्तिश्च मही तया यत्,
खस्थं गुरु स्वाभिमुखं स्वशक्त्या।
आकृष्यते तत् पततीव भाति,
समे समन्तात् क्वियं यतः खे॥

मही पृथिवी आकृष्टशक्तिः आकृष्टिराकर्षणं शक्तिर्यस्याः सा तथाभूता। ननु तथाविधशक्तिः केन कार्य्यबलेनानुमीयत इति जिज्ञासायां तथाविधशक्त्यनुमानलिङ्गभूतं तत् कार्य्यं दर्शयति तयेति। तया स्वशक्त्या खस्थं आकाशस्थं यत् गुरु वस्तु स्वाभिमुखमाकृष्यते तत् पततीव इति भाति प्रकाश्यते।

ननु आकाशस्य गुरुवस्तुधारणाक्षमत्वात् अधोगतिरेवोचिता। कुतस्तदर्थं पृथिव्या आकर्षणशक्तिकल्पनेत्यत आह समे इति। यत इयं कुः पृथिवी समन्तात् सर्व्वासु दिक्षु समे सदृशे खे आकाशे वर्त्तत इति शेषः। तथाच सर्व्वासु दिक्षु पृथिव्याः समाकाशवर्त्तित्वात् ऊर्द्धाधो विभागो न सम्भवति। तथाहि यथा अस्माकं मस्तकोपरिवर्त्ति व्योमस्थगुरुवस्तुनः पादसंयोगदेशसम्बन्धस्तथा निम्नपृष्ठस्थलोकानामपि मस्तकोपरिवर्त्ति गगणस्थगुरुवस्तुनः पाददेश-

सम्बन्धोऽवश्यमङ्गीकार्य्य एव। तथा सति अस्माकं य ऊर्द्ध्वभागः स एव पृष्ठान्तरस्थलोकानामधोभागः। तेषां पुनर्य ऊर्द्ध्वभागः स एवास्माकमधोभाग इत्यूर्द्ध्वाधो विभागः कल्पित एव। एवञ्च अचेतनानां वस्तूनां तत्तद्देशीयलोकविशेषकल्पनानुसारेण गत्यसम्भवात् पृथिव्या आकृष्टिशक्तिरेव वस्तुगत्या अनुमेयेति भावः।

एतेन पतनं प्रति आकर्षणस्य कारणताप्रदर्शनात् भूपिण्डं प्रति तद्दिशाकर्षणाभावेन पतनासम्भवात् अचलभावेनावस्थानं सुघटमेवेत्यपि दर्शितम्।

बौद्धानां युक्तिमाह।

भपञ्जरस्य भ्रमणावलोका-
दाधारशून्या कुरिति प्रतीतिः।
खस्थं न दृष्टं गुरु च चमातः
खेऽधः प्रयातीति वदन्ति बौद्धाः॥

भपञ्जरस्य नक्षत्रचक्रस्य भ्रमणावलोकात् भ्रमणदर्शनात् कुः पृथिवी आधारशून्या इति प्रतीतिः प्रत्ययो भवतीति शेषः। तथाच यदि पृथिव्या आधारसत्ता तदा नक्षत्रचक्रस्य पृथिव्या निम्नभागे गमनासम्भवात् भ्रमणं न सम्भवतीति भावः। तथा गुरु वस्तु च खस्थमाकाशे निश्चलभावेन स्थितं न दृष्टम्। अतः चा पृथ्वी खे आकाशे अधः प्रयाति निरन्तरं पततीति बौद्धा वदन्ति। आकाशस्यानन्तत्वात् युगसहस्रेणापि न तस्याः पतननिवृत्तिरिति तेषामाशयः।

ननु निरन्तर पतनशीला चेत् पृथिवी तर्हि चन्द्रार्कादीनामिकेनाङ्का भ्रमणासम्भवात् एकाहानन्तरं पुनरुदयो न स्यादित्यतो बौद्धा आहुः।

द्वौ द्वौ रवीन्दू भगणौ च तद्व-
देकान्तरं तावुदयं व्रजेताम्।
यदब्रुवन्नेवमनर्थवादान्
ब्रवीम्यतस्तान् प्रति युक्तियुक्तम्॥

रवीन्दू भगणौ च द्वौ द्वौ स्तः। तौ एकान्तरं एकाह्नान्तरं उदयं व्रजेताम्। तथा च द्वयोरेव तयोरेकरूपतया नास्माकं पृथक्त्वेनानुभव इति भावः। तन्मतापाकरणायाह यदब्रुवन्नित्यादि। बौद्धा एवं अनर्थवादान् यत् यस्मादब्रुवन् उक्तवन्तः अतस्तान् प्रति युक्तियुक्तं ब्रवीमि। तदेवाह—

भूः खेऽधः खलु यातीति बुद्धिर्ब्बौद्ध ! मुधा कथम्।
यातायातञ्च दृष्ट्वापि खे यत् चिप्तं गुरुक्षितिम्॥

हे बौद्ध ! खे आकाशे यत् गुरु वस्तु चिप्तं तस्य क्षितिं प्रति यातायातं दृष्ट्वापि मुधा वृथा भूः खे खलु अधो यातीति बुद्धिस्तव कथं भवति। तथाच यदि भूर्निरन्तरमधो याति तदा व्योम्नि चिप्तं गुरु वस्तु भुवं प्राप्तुं कथमपि न शक्नुयात् उभयोरपि पतनशीलत्वात्। एतद्दृष्ट्वा भूमेः पतनबुद्धिर्न सम्भवत्येवेति भावः।

भूगोलकेन्द्रस्थपुरनिवेशमाह—

लङ्का कुमध्ये यमकोटिरस्याः प्राक् पश्चिमे रोमकपत्तनञ्च।
अधस्ततः सिद्धपुरं सुमेरुः सौम्येऽथ याम्ये वड़वानलश्च॥

कुमध्ये पृथिवीमध्यभागे लङ्का। अस्याः प्राक् यमकोटिः। अस्या लङ्कायाः पश्चिमे रोमकपत्तनम्। ततो लङ्कायाः अधः सिद्धपुरम्। लङ्कायाः सौम्ये उत्तरदिशि सुमेरुः। तस्या याम्ये दक्षिणदिशि वड़वानलः।

तेषां पुराणामन्तरं प्रतिपादयति।

कुवृत्तपादान्तरितानि तानि स्थानानि षड् गोलविदो वदन्ति।
वसन्ति मेरौ सुरसिद्धसङ्घा और्व्वे च सर्व्वे नरकाः सदैत्याः॥

तानि षट् स्थानानि लङ्कादीनि परस्परं कुवृत्तस्य भूपरिधेः पदान्तरितानि भूपरिधेर्यावत् परिमाणं तच्चतुर्थभागव्यवहितानि। गोलविद एवं वदन्ति। तत्र मेरौ सुरादयो वसन्ति। और्व्वे वड़वानलाख्ये स्थाने सदैत्या दैत्यैः सहिताः सर्व्वे नरकाः सन्तीति शेषः। एवमेवोक्तं सूर्य्यसिद्धान्ते।

उपरिष्टात् स्थितास्तस्य सेन्द्रा देवा महर्षय: ।
अधस्तादसुरास्तद्वत् द्विषन्तोऽन्योन्यमाश्रिता: ॥
तत: समन्तात् परिधि: क्रमेणायं महार्णव: ।
मेखलेव स्थितो धात्र्या देवासुरविभागकृत् ॥
समन्तान्मेरुमध्यात्तु तुल्यभागेषु तोयधे: ।
द्वीपेषु दिक्षु पूर्व्वादि नगर्य्यो देवनिर्म्मिता: ॥
भूवृत्तपादे पूर्व्वस्यां यमकोटीति विश्रुता ।
भद्राश्ववर्षे नगरी स्वर्णप्राकारतोरणा ॥
याम्यायां भारते वर्षे लङ्काख्या तन्महापुरी ।
पश्चिमे केतुमालाख्ये रोमकाख्या प्रकीर्त्तिता ॥
उदक्सिद्धपुरी नाम कुरुवर्षे प्रकीर्त्तिता ।
तस्यां सिद्धा महात्मानो निवसन्ति गतव्यथा: ॥

सूर्य्यसिद्धान्ते सुमेरुमुपरिगतं मत्वा लङ्कायास्तद्दक्षिणदिग्गतत्वं सिद्धपुरस्य च तदुत्तरदिग्गतत्वं वड़वाख्यस्य तु अध:स्थत्वं प्रतिपादितम् । सिद्धान्तशिरोमणौ तु लङ्कामुपरिस्थां मत्वा मेरोरुत्तरगतत्वं बड़वाख्यस्य दक्षिणगतत्वं सिद्धपुरस्य च अध:स्थत्वं प्रतिपादितमितयनयोर्न विरोध: । तत्तत्स्थानवासिन: सर्व्वे एव पृथिव्या उपरिस्था वयमिति मन्यन्ते इत्याह ।

यो यत्र तिष्ठत्यवनीतलस्थ-
मात्मानमस्या उपरिस्थितञ्च ।
स मन्यतेऽत: कुचतुर्थसंस्था
मिथश्च ते तिर्य्यगिवामनन्ति ॥

यो यत्र तिष्ठति स तत्र अवनीतलस्थं भूपृष्ठस्थं आत्मानं अस्या: पृथिव्या उपरिस्थितं मन्यते । अत: कुचतुर्थसंस्था: स्वस्वस्थानतश्चतुर्थभागीयस्थानेषु स्थिता मिथ: परस्परं तिर्य्यगिव वक्रभावेण स्थितानिव आमनन्ति जानन्ति वदन्ति वा । यथा लङ्कास्था यमकोटिस्थान् रोमक पत्तनस्थान् सुमेरुस्थान् वड़वानलस्थांश्च वक्रभावेण स्थितान् जानन्ति, न त्वध:शिरस्कान् नाप्यूर्द्ध्वशिरस्कान् । एवं सर्व्वत्र ।

अथ सिद्धपुरस्थानामस्मदपेक्षया कीदृशोऽवस्थानविशेष इत्याह।

अधःशिरस्काः कुदलान्तरस्था स्छायामनुष्या इव तीरनीरे।
अनाकुलास्तिर्य्यगधः स्थिताश्च तिष्ठन्ति ते तत्र वयं यथात्र॥

कुदलान्तरस्थाः पृथिव्या निम्नदलस्थिता अधःशिरस्काः। वयं यां दिशमधो मन्यामहे तस्यां दिशि शिरो येषां ते तथाभूताः। तर्हि तेषामस्माकञ्चावस्थानं कीदृक् इत्यत्र दृष्टान्तमाह छाया इति। यथा तीरनीरे नद्यादिजलाशयस्य तीरनीरयोश्छाया मनुष्या दृश्यन्ते तद्वत्। तथा च यथा नद्यादितीरे कश्चिद्दण्डायमानो मानवस्तदभिमुखैरितरैः पुरुषैरूर्द्ध्वशिरस्को दृश्यते। तदीयच्छाया तु नीरे प्रतिविम्बभावेन पतिता अधःशिरस्का दृश्यते तद्वदयमत्र ऊर्द्ध्व-शिरस्काः दलान्तरस्थास्तु अधःशिरस्का इति भावः।

ननु चतुर्थ भागस्थानां तिर्य्यक्भावेनावस्थानात् दलान्तरस्थाना-मधःशिरस्कतयावस्थानञ्च किमितेषामाकुलतामुत्पादयति इत्यत्राह अनाकुला इति। तिर्य्यगधः स्थिताः तिर्य्यक्शिरस्का अधःशिर-स्काश्च अनाकुलाः। तिर्य्यगादिशिरस्कत्वेऽपि ते कथमनाकुला इत्यत्राह तिष्ठन्तीति। वयमत्र यथा तिष्ठामः तेऽपि तत्र तथैव स्तिष्ठन्ति। तथा च तत्रस्थो लोक आत्मानं तिर्य्यक्शिरस्कमधःशिरस्कं वा नावबुध्यते अस्माभिस्तथात्वे नावबुध्यमानोऽपि ऊर्द्ध्वशिरस्कमेवा-त्मानं जानातीति एतत् पृष्ठस्थ लोकवत् इति भावः। ननु।

ये यत्र दृश्यते भास्वान् स तेषामुदयः स्मृतः।
तिरोभावश्च यत्रैव तत्रैवास्तमनं रवेः॥
नैवास्तमनमर्कस्य नोदयः सर्व्वदा सतः।
उदयास्तमनाख्यं हि दर्शनादर्शनं रवेः॥

इति ति विष्णुपुराणवचने रवेः सर्व्वदैव परिभ्रमणाभिधानात् देशविशेषे दिनं देशविशेषे च रात्रिरिति प्रतीयते। तत् चतुर्षु पूर्व्वोक्तलङ्कादिस्थानेषु दिनरात्र्योः कीदृशी व्यवस्थेत्यत्राह।

लङ्कापुरेऽर्कस्य यदोदयः स्यात् तदा दिनार्द्धं यमकोटिपुर्य्यां ।
अधस्तत: सिद्धपुरेऽस्तकाल: स्याद्रोमके रात्रिदलं तदैव ॥

यदा लङ्कापुरे अर्कस्य उदयः स्यात् तदा यमकोटिपुर्य्यां दिनार्द्धम् । ततो लङ्कापुरादधः सिद्धपुरे अस्तकालः । तदैव रोमके रात्रिदलं रात्रेः शेषार्द्धं स्यात् विद्येत । अतएवोक्तं ज्योतिषे ।

क्वचिदुदयं क्वचिदस्तं क्वचिदर्द्धनिशां क्वचिच्च मध्याह्नम् ।
क्वचिदन्यकालमेवम् सततं कलयन्ति गोलज्ञाः ॥

एतन्मतमेव इंलण्डीयैरवलम्बितम् । परन्तु ते पृथिव्या भ्रमणमप्यङ्गीकुर्व्वन्ति । तदप्यस्मद्देशीयपण्डितानां नैकान्ततो असम्मतम् । प्राचीनतमेनार्य्यभट्टेन तथैवाभिधानात् । यथोक्तम् ।*

भपञ्जरः स्थिरो भूरेवाहृत्याहृत्योदयास्तं सम्पादयति ग्रहनक्षत्राणाम् ।

भपञ्जरो नक्षत्रगणः स्थिरः । भूरेव पृथिव्येव आहृत्य आहृत्य परिभ्रम्य परिभ्रम्य ग्रहनक्षत्राणां उदयास्तं सम्पादयति । पृथिव्या भ्रमणवशाल्लोको ग्रहादीनामुदयास्तमिव पश्यतीति भावः ।

तत्र दृष्टान्तायाह ।

अनुलोम गतिर्नौस्थः पश्यत्यचलं विलोमगं यद्वत् ।
अचलानि भानि तद्वत् सम पश्चिमगानि लङ्कायाम् ॥

अनुलोमगः यदभिमुखी नदीगतिस्तदभिमुखं गच्छन् अतिद्रुतं गच्छन्नित्यर्थः । नौस्थः नौकास्थितो यद्वत् यथा अचलं तीरादिकं विलोमगं विपरीताभिमुखं प्रस्थितं पश्यति । तद्वत् लङ्कायां स्थितो जनः अचलान्यपि तानि ग्रहनक्षत्राणि समपश्चिमगानि वास्तविकपश्चिमगामीनि न तु कोणाभिमुखगामिनीति यावत् पश्यति । एतेन पृथिव्याः पूर्व्वाभिमुखी गतिरपि दर्शिता इति ।

व्याख्याता—
श्रीकृष्णनाथ न्यायपञ्चाननः ।

---

* वचनमेतदाधुनिके वङ्गभाषया रचिते क्षुद्रपुस्तके एव दृश्यते न तु क्वापि प्रामाणिक संग्रहेऽपि, मूलग्रन्थस्तु दुर्लभ एव । इति सम्पादकः ।

# वशीकृतभूत:।

( पूर्व्वप्रकाशितात् परम्।)

अथ क्रमशस्तु सायं प्रवृत्तम्, रविरपि प्रातरारभ्य करं प्रसार्य्य अन्तरीक्षे विचरन् तावत् भूचरखेचरान् व्यापारयन् स्वेषु स्वेषु कर्म्मसु, नितान्तं क्लान्तः श्रममपनेतुं वारुणीं सेवमान इव संकुचितकर: अम्बरं परिहरन् नीचैरस्खलत्।

तदवलोक्य अन्धकारा अपि पुञ्जीभूय जगदाक्रमितुं प्रवर्त्तन्ते, दिवाभीता: श्वापदा अपि आहारमन्वेष्टुं शनै: शनैर्निष्क्रम्यन्ति, झिल्लीकीटा अपि कटु रटन्ति, ईदृशे समये कापालिक आह।

कापा। विभेषि वामदेव! साहसं भज भूतमुपासितुम्।

वाम। यो न प्रेतपतेरपि बिभेति तस्य प्रेतात् का भीति: ? विशेषतस्तु गुरुचरणा एव मे शरणम्।

कापालिकस्तु भूतडामरोक्तविधिना मण्डलं विरचय्य भूतपते: क्रोधराजभैरवस्य यन्त्रं विलिख्य वामदेवमासने समुपावेशयत्। स्वयञ्च पृथगासने उपाविशत्! ततश्च गुरुणानुमतो वामदेव: प्रथमं क्रोधराजभैरवं ध्यातुमारभते यथा—

"ओँ" ज्वालामालाकुलं दीप्तं युगान्ताग्निसमप्रभम्।<br>
भिन्नाञ्जनं महाकायं कपालकृतभूषणम्॥<br>
साट्टहासं महारौद्रं त्रैलोक्येषु भयङ्करम्।<br>
तन्मध्ये तु महाभीमं वज्रक्रोधं चतुर्भुजम्॥<br>
दक्षिणेऽङ्ककरे वज्रं तर्ज्जनं वामपाणिना<br>
क्रोधमुद्राञ्च तदध: पाणिभ्यां धारिणं भजे॥"

एवं ध्यात्वा क्रोधराजं संपूज्य च यथोक्तं भूतमन्त्रं जपितुमारभते। क्रमशस्तु रात्रेर्यामार्द्धं यामो यामौ च व्यतीतौ। तदा शनै: शनै: वामदेवस्कन्धे भूत आविष्ट:। तदा वामदेवस्य शरीरे

पादाग्रात् केशाग्रं यावत् "चमदिति" विद्युदिव किमपि सञ्चचार। रोमाणि कण्टकितानि, वपुः सिष्वेद। तद्विज्ञाय कापालिकः "मा भैषीः वत्स! मा भैषीः" इति मुहुर्मुहुरुच्चैरुच्चचार।

अथ मुहूर्त्तादिवानन्तरं चतुर्दिक्षु द्विगुणतरमन्धकारं विधाय "मड़मड़ेति" "मटन्मटदिति" झञ्झाप्रभञ्जनः सकलाटवीं त्रोटयति। कुत्र वा व्याघ्रः कर्णजर्ज्जरं गर्ज्जति, क्व वा मदोत्कटा करिघटा विकटमारटन्ती साटोपं मटदिति विटपं पाटयति। (कापालिकस्तु "मा भैषीः वत्स! मा भैषीः इति उच्चरति) कदाचिद्वा फणिनः वामदेवस्य क्रोड़ोपरितः इतस्ततश्चंक्रम्यन्ते। (कापालिकः "मा भैषीः वत्स! मा भैषीः इति समाश्वासयति।) कदाचिद्वा मशकदंशक पिपीलिका दशन्ति, कदाचिद्वा विकटदंष्ट्राः शवा भीषयन्ते। (कापालिकः मा भैषीः वत्स! मा भैषीः इत्यभयं वितरति।) वामदेवस्तु स्तोकमपि नासनात् विचलति।

अथ मुहूर्त्तादिव सर्व्वे विघ्ना द्राक् निवृत्ताः। शङ्कुतुण्डनामा भूतोऽपि सम्मुखे समुपस्थितः। आगत्य च स प्रसारिताभ्यां दीर्घपाणिभ्यामग्रभूमिमवष्टभ्य उपविष्टः। तथोपविशतश्च तस्य जानुनी मस्तकादप्युपरि गते। वर्णस्तु तस्य धूसरानुविद्धः कृष्णः, मस्तकः संख्येयकर्कशकेशः, ललाटो मध्ये गभीरः, भ्रुवौ दीर्घरोमाणौ, चक्षुषी कोटरमग्ने, नासिका मध्ये समतला छिद्रावशेषा, ओष्ठौ क्रमसूक्ष्मौ दीर्घौ च, शरीरं पूयशोणितस्रावि विस्रगन्धि निर्म्मांसनिष्ठुरास्थिमयं, वायवीयञ्च, चर्म्म गोधावत् श्लथकठोरम्, भूतस्यास्य सूक्ष्मं सुखकुहरम्, उदरो लम्बमानः, सुतरामसौ मुखं व्यादाय बृहद्ग्रासं द्रुतं किमपि भोक्तुं वक्तुं वा न शक्नोति, मशकदंशकपतङ्गादिकं समीपमागतं हिकरेणैव गृहीत्वा मुखकुहरे क्षिपति।

आगत्य च स सानुनासिकं पृच्छति—

शङ्कु। भोँः! कँथँमँहँ सँवोँधिँतँः?

वाम। भवन्तं वशीकर्त्तुम्, भवता वाञ्छितानि कर्म्माणि च कारयितुम्, समाहूतोऽसि।

शङ्कु। किँन्तुँ मँद्विँधँस्यँ भूँतँवँशँस्यँ एँषँ निँसँर्गँ: यँन्निँरँन्तँरँ कँर्म्मँ एँवँ कँरोँमिँ, कँर्म्मँ ऋँतेँ नँ क्षँणँमँपिँ अँवँतिँष्ठेँ, यँर्हिँ कँर्म्मँ नँ मिँलँतिँ तँर्हिँ प्रँभोँरँवँटुँ मँटँदिँतिँ लोँटँयेँ किँकँरोँऽहँम्।

वाम। तथैवास्तु।

शङ्कु। भूँतोँऽम्ँ वँशीँभूँतोँऽभँवँम्ँ। किँ कँरोँमिँ कँर्म्मँ निँर्द्दिँशँ।

वाम। हिमालयप्रान्तात् प्रभूतं स्वर्णमाहर।

( भूतस्तु वेगेन प्रस्थित:। कापालिकोऽपि यथाभिमतं देशं जगाम। वामदेवोऽपि स्वगृहं गत:। भूतोऽपि मुहूर्त्तादेव अशीतिमोनकं कनकमानीय वामदेवस्य पुरो न्यक्षैप्सीत्। )

शङ्कु। भोँ:! किँ कँरोँमिँ कँर्म्मँ निँर्द्दिँशँ।

वाम। मनुष्यरूपेण स्वर्णकारापणं गत्वा विक्रीय स्वर्णं रूप्यकाण्यानय।

शङ्कु। नीँयँन्ताँ रूँप्यँकाँणिँ किँ कँरोँमिँ कँर्म्मँ कँथँयँ।

वाम। हट्टायां गच्छ, सुखाद्यमाहर, गृहोपकरणान्यानय, मृदं खन, इष्टकानि निर्म्माहि, सरोवरं विरचय, अट्टालिकोपयोगीनि सुदृढ़ाणि गुरूणि दारुणि गिरिभ्य उपाहर, आरामे देवतरूनारोपय, तेभ्यस्तोयमासिञ्च, तृणानि पाटय, सरोवरस्य वारिपर्णीरुच्चाटय, अत्र दुर्ल्लभानि देशान्तरात् स्वादूनि फलानि चपलमाचिनु, पाकार्थीनि कुठारेण निष्ठुरकाष्ठानि कुट्टय, इत्यादि इत्यादि।

( एवं वामदेवो यद् यद् आदिशति, शङ्कुतुण्डस्तत्क्षणमेव तत् सम्पादयति। एवं कतिपयैरेवाहोभि: यद् यद् इष्टतमं लोके तत् सकलमविकलं सम्पन्नं वामदेवस्य। कदाचिदसौ निर्व्विशेषितसुरशाखी दरिद्रेभ्यो द्रविणानि निरन्तरमकातरो वितरति। देवान्

( ६ )

यजते याजयति च, सदन्नैः क्षुधितान्, पेयैः पिपासून् तोषयति। किन्तु प्रायः प्रतिक्षणं भूत आगत्य—"भोँः किँ कँरोँमिँ कँर्म्मँ उँपँदिँशँ" इति वामदेवमुद्वेजयति, तेन हि वामदेवः सभासु उपविष्टः विद्वद्भिर्वा सह्वालपितुं न शक्नुते, केवलं निभृत एव गृहे सोद्वेगमवतिष्ठते। दासदासीप्रभृतिभिः परिपूर्णोऽपि न शान्तिमनुभवति, न किञ्चित् कार्य्यमवशिष्यते भूतं यत् कारयिष्यति, यदि वा कर्म नोपदेक्ष्यते, तदा भटदिति घाटां त्रोटयित्वा पास्यति शोणितम्, इत्येवं भयव्याकुलितमनाः वामदेवो दुरत्ययां प्राप चिन्ताम्।

वामदेवे अन्नं भुञ्जाने वा, तल्पोपरि शयाने वा, ईश्वरचिन्तायां निविशमाने वा, सभायामुपविशति वा, भूत आगत्य—भोँः किँ कँरोँमिँ कँर्म्मँ उँपँदिँशँ "इत्येवं त्रासमुत्पादयति। अहो भूतविडम्बना।

इति वशीकृतभूते द्वितीयं काण्डम्॥ (क्रमशः)।

---

## तत्त्वप्रपंचः।

(पूर्व्वप्रकाशितात् परम्।)

### तत्र रज्जुबन्धनम्।

अहह एकेन बन्धनेन हि अपगतस्वातन्त्र्यः पुरुषः क्लिश्यते। किन्तु आजन्म यावन्मृत्युं एकस्मिन् शरीरे अन्तर्ब्बहिश्च सहस्रबन्धनदुःखमनुभवन्तः कथं वा पुरुषपशवः जीवन्ति? विचित्रमेतत्, अहो नमोऽस्तु मायामय्यै बुद्ध्यै भगवत्यै।

तत्र गुणानां त्रिविधत्वात् प्रथमतो बन्धनकारणमपि सुखरूपं दुःखरूपं मोहरूपमिति त्रिविधम्। (यद्यपि गीताचतुर्द्दशाध्याये उक्तम् सत्त्वगुणः सुखेन,रजोगुणो दुःखेन,तमोगुणो मोहेन पुरुषं बध्नातीति तत्तु तत्तद्गुणानामाधिक्येन व्यवह्रियते। किन्तु जगति सर्व्वमेव वस्तु त्रिगुणं, तेन सुखानुभवसमयेऽपि दुःखं मोहश्च वर्त्तते। दुःखानु-

भवेऽपि सुखं मोहश्च वर्त्तते। मोहकालेऽपि सुखं दुःखञ्च वर्त्तते। (१) इति स्मर्त्तव्यम्। ) यथा—

तत्र सत्त्वं निर्म्मलं स्फटिकमणिरिव भास्वरं निरुपद्रवं शान्तं ज्ञानमयं सुखरूपं एवं बन्धनकारणम्।

यथा "अहं सुखी" "अहं ज्ञानी" देवा योगिनो मुनयश्च भावयन्ति "कुलन्तु मे विमलं चान्द्रमसमिव" "पिता मे परमपण्डितः" "माता च जगज्जननी पार्व्वतीव, "स्त्री च मे श्रीरिव, कमलायतेक्षणा कोमलाङ्गी कोकिलेव मञ्जुभाषिणी, ज्योत्स्नेव शीतस्पर्शा कान्तिमती च, अरुन्धतीव पतिपरायणा।" "पुत्राश्च मे सुचरित्राः पण्डिताः सर्व्वाङ्गसुन्दराः अर्थोपार्ज्जननिपुणाश्च।" "स्नुषा मे गृहशोभा इव" "नसारोऽपि मधुरगिरः कीरा इव" "सुधाधवलितस्त्रितलप्रासादः, मृदुप्रवहत्पवनमुपवनम्, एवं वसनं भूषणं यानमासनं सर्व्वमेव सुखप्रदम्, इत्यहं सुखीति, इत्थं सुखेनापि सात्त्विकेन क्लिश्यन्ते जन्तवः। (२)

इन्द्रादयो देवा अपि सुखेनैव बद्धाः। ते खलु नन्दनवनमधिवसन्ति, सुधामश्नन्ति, भुञ्जते च यज्ञभागम्। तथापि न स्वतन्त्राः। परन्तु मानुषमपेक्ष्य समधिकदिनानि जीवन्ति, भोगान्ते पुनर्म्रियन्ते च। स्वर्गेऽपि देवानां मध्ये श्रेष्ठाः श्रेष्ठतमाः श्रेष्ठतराश्च वर्त्तन्ते, अतस्तत्रापिदुःखम्।

अहन्तु पण्डितः बुद्धिर्म्मे कुशाग्रीया सदर्थग्राहिणी सर्व्वत्रैवाप्रतिहता सर्व्वमेव पदार्थं ज्योत्स्नालोकितमिव भाषयते, इत्यहं—ज्ञानी। इत्येवमादिकं सुखबन्धनमिति।

दुःखरूपं बन्धनकारणं यथा—कान्तिमतीमबलां लभेय, तत्तु रजोगुणजन्यम्। रजस्तु रागात्मकम्, रञ्जनाद्रागः, यथा सिन्दूरद्रवो

(१) एतत्तु विज्ञानभिक्षुणा—पातं सार्धं १५ योगवार्त्तिके विशेषेण प्रपञ्चितम्।
(२) "परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्व्वं विवेकिनः।" पातं। सार्धं। १५।

वस्त्रादिकं रञ्जयतीति रागपदेन व्यवह्रियते। तथा रागः अनुरागः योषित्पुरुषयोः परस्परप्राप्तिस्पृहया, प्राप्ते विषये मनस्तुष्टिलक्षणेन सङ्गेन च समुत्पन्नः सन् चित्तं रञ्जयति इति रागः कथ्यते।

कथमहं कलकण्ठ्यास्तस्याः आलापं श्रुतिविवरे लभेय, कदा तां कोमलाङ्गीं स्पृशामि, लावण्यमयं रूपं अवलोकये। अहं स्वर्गामृतरसं पिबामि, मल्लिकासौरभं जिघ्रामि, इत्येवं शब्दादिषु विषयेषु समनुरक्तः तत्तद्वस्तुलाभाय कर्म्मसु प्रवर्त्तते। लब्धा च तत्तद्वस्तु रक्षायै यतते, इति दुःखरूपेण कर्म्मणा लोभेन विषयानुरागेण च पुरुषः स्वयं बध्यते। अस्य दुःखबन्धनस्यापि कारणमसंख्यम्। स्त्री पुत्रः क्षेत्रं मित्रं यानमासनमन्नमाच्छादनमट्टालकादिकमिति।

मोहबन्धनं यथा—कश्चित् अनवहितः पुरुषः हितमपि शब्दमहितमिति शृणोति। अनवधानतया आत्मानं कूपे पातयति। प्रमादात् पदा आशीविषं स्पृशति। गुड़पानकमिति विषद्रवं पिबति। मोहस्तु तमोगुणजन्यः अन्धकाररूपः आवरणशक्तिमान् यथार्थज्ञानमावृणोति। तेन विपर्य्ययज्ञानं जनयति। यथार्थज्ञानन्तु यथास्थितवस्तुबोधः, तमस्तदावृणोति, तस्माद्विपरीतज्ञानं तमस उद्गिरणक्ति, तेन एकविधं वस्तु अन्यविधं बोधति, उन्नतावनतं स्थानं समं पश्यति। इति सर्व्वं जनं वस्तुयाथार्थ्यज्ञाने मोहयति। तमसा समभिभूतो जनः प्रमाद्यति, कार्य्ये निरुद्यमो भवति, निद्राति च।

अस्य मोहबन्धनस्यापि कारणमसंख्यम्। असंख्यं शब्दस्पर्शरूपरसगन्धं विपरीतं जानाति। तेन च मोहेन पुरुषो बध्यते।

कदाचित् सत्प्रसङ्गेन श्रुतेन सत्त्वं समधिकमुच्छलति, तदा रजोगुणस्तमोगुणश्च क्षीणो भवति। ततः सुखमुत्पद्यते। चौर्य्यकार्य्योपार्ज्जिते धनेऽपि यत् सुखं तदपि सत्त्वकार्य्यमेव। यदा रजोगुणः समुदेति, तदा सत्त्वं तमोगुणश्च सङ्कुचति, तेन दुःखं लोभः कर्म्मप्रवृत्तिश्चोत्पद्यते। तपोदानादावपि सत्त्वकार्य्ये यद्दुःखं जायते

तदपि रजःकार्य्यम् । यदा तमोगुण उद्रिणक्ति, तदा सत्त्वं रजश्च तिरोभवति, प्रमादः आलस्यं निद्रा च पुरुषमभिभवति । सुखमहं निद्रितवान् प्रसन्नं मे मनः बुद्धिर्मे स्थिरा भवति । इति तमः सम्भूतायामपि निद्रायां यत्सुखं तदपि सत्त्वकार्य्यमेव । दुःखमहं निद्रितवान् भ्रमतीव मे मनः न कस्मिन्नपि विषये चित्तं लगति । इति तमःकार्य्यरूपायामपि निद्रायां यद्दुःखं तदपि रजःकार्य्यमेव । गाढ़ं हृतचेतनोऽहं निद्रितवान् गुरूणि मे गात्राणि क्लान्तं मे चित्तमलसं कस्मिन्नपि कार्य्ये न प्रसरति । ईदृशी च निद्रा समधिकतमोगुणप्रसूता, एवं लोभादिकमपि ज्ञातव्यम् । (१)

एवंविधैः सहस्रजालतुल्यैस्त्रिगुणमयैर्ब्बन्धनैः पुरुषपशवः सुदृढ़ं निबध्यन्ते । यथा कश्चिज्जालनिपतितः शूकरः जालमोचाय यावत् प्रवलमास्फालयति तावत् अपुनर्निर्गमाय हस्तपादमस्तकेषु दृढ़ं बध्यते । एकस्मिन् पादे कथञ्चित् निष्कासिते द्वितीयः पादो जालरन्ध्रान्निर्गत्य अपरजालमार्गेणाक्रष्यते । एवमतिशयमुल्लम्फने प्रलम्फने च क्रियमाणे शूकरः लगुड़ेन भल्लास्त्रेण वा ताड्यमानो व्याधैर्निहतो भवेत् । कश्चिद्वा शूकरस्तथा जालबद्धोऽपि तस्मान्मुच्यते यदि जालं शिथिलजीर्णग्रन्थि स्यात् । अथवा यदि कश्चित् मूषिको जालं छिन्द्यात् ।

तथा प्रायशो निबद्धेषु पुरुषेषु कश्चिदेव पुमान् विवेकेन शिथिलग्रन्थि विषयजालं छेत्तुं शक्नोति । कृपालुगुनारुणा वा यदि ज्ञानमुपदिश्य विषयजालं छिद्यते तदा मुच्यते ।

बन्धनाच्च आध्यात्मिकमाधिभौतिकमाधिदैविकमिति त्रिविधानि दुःखानि जायन्ते । तेषां दुःखानां चिराय निवृत्तिरेव मोक्षः । स एव चतुर्णां पुरुषार्थानां परमपुरुषार्थः । पुरुषाणां बुद्धेरिष्टः अर्थात् पुरुषाणां बुद्धिः सर्व्वथा मोक्षमेव इच्छति । दुःखानां त्रिविधत्वं

(१) सर्व्वमेतत् तत् तत् प्रसङ्गेन विवरिष्यते ।

सांख्यदर्शनस्थूलार्थं प्रपञ्चितम्। अस्मिन् शास्त्रे हेयं हेयहेतुः हानोपायः हानञ्च यथाक्रमं दुःख-दुःखहेतु-दुःखनिवृत्त्युपाय-दुःखनिवृत्ति-शब्देन कथ्यन्ते।

इति तत्त्वप्रपञ्चे रज्जुबन्धनं नाम प्रथमाध्यायः।

(क्रमशः।)

---

# FIRST EXAMINATION IN ARTS 1893.

---

## SANSKRIT.

### Second Paper.

*The figures in the margin indicate full marks.*

I. *(a)* Explain in English :—

(1) आशीर्भिरभ्यर्च्य ततः क्षितीन्द्रं प्रीतः प्रतस्थे मुनिराश्रमाय।
तं पृष्ठतः पृष्ठमियाय नम्रो हिंस्रेषु दीप्तास्त्रधरः कुमारः॥

(2) बिम्बागतैस्तीरवनैः समृद्धिं निजां विलोक्यापहृतां पयोभिः।
कूलानि सामर्षतयेव तेनुः सरोजलक्ष्मीं स्थलपद्महासैः॥

(3) अरण्ययाने सुकरे पिता मां प्रायुङ्क्त राज्ये बत दुष्करे त्वाम्।
मा गाः शुचं वीर भरं वहाशुमाभाषि रामेण वचः कनीयान्॥

(4) शितशिखनिकृत्तकृत्स्नवक्त्रः क्षितिभृदिव क्षितिकम्पकीर्णशृङ्गः।
भयमुपनिदधे स राक्षसानामखिलकुलक्षयपूर्वलिङ्गतुल्यः॥

(5) अध्वरेष्विष्टिनां पाता पूर्त्तौ कर्म्मसु सर्व्वदा।
पितुर्नियोगाद्राजत्वं हित्वा योऽभ्यागमद्वनम्॥

*(b)* Account for the seventh case ending in कर्म्मसु, the sixth case ending in इष्टिनां, and fourth case ending in आश्रमाय। 3

*(c)* Derive the words आशीः, हिंस्र, and कनीयान्। 4

(*d*) From what root and by what *bibhakti* are the words दुयाय, तेनुः and उपनिदधे formed ?

(*e*) Conjugate the roots of these words in लट् 4 third person only.

2. Explain fully in Sanskrit :—

देहं विभ्रच्चुरस्राग्नौ मृगः प्राणैर्हि देविषन् ।
ज्याघुष्टकठिनाङ्गुष्ठं राममायान्सुमूर्षया ॥

3. (*a*) Translate into English :—

चिरं रुदित्वा करुणं सशब्दं गोत्राभिधायं सरितं समेत्य ।
मध्येजलाद्राघवलक्ष्मणाभ्यां प्रत्तं जलं यज्जलमन्तिकेऽपाम् ॥

(*b*) Derive the word प्रत्त and explain the *samasa* 2 in मध्येजलात् ।

4. (*a*) Write in your own words in Sanskrit the 6 purport of the following :

प्रस्थास्यमानावुपसेदुषस्तौ शोशुच्यमानानिदमूचतुस्तान् ।
किं शोचतेहाभ्युदये वतास्मान् नियोगलाभेन पितुः कृतार्थान् ॥
विद्युत्प्रणाशं स वरं प्रनष्टो यद्वोढ्ड शोषं तृणवद्विशुष्कः ।
अर्थे दुरापे किमुत प्रवासे न शासनेऽवास्थित यो गुरूणाम् ॥

(*b*) Why are the words प्रनष्ट and विद्युत्प्रणाशं written 2 with different नकार ।

5. (*a*) Change the voice in the following:—

दण्डकामध्यवात्तां यौ वीर रक्षःप्रकाण्डकौ ।
नृभ्यां संख्येऽकृषातां तौ सभ्रत्यौ भूमिवर्द्धनौ ॥

(*b*) What are the meanings of the words रक्षःप्रकाण्डकौ and संख्ये ? 2

6. Translate into Sanskrit :

What, is this wedded wife of the great king Dasaratha, my dear friend Kausalya ? Who can believe it is she ? She was in the house of Dasaratha like the goddess of prosperity. Or, rather she was the goddess of prosperity herself, what need of the particle of comparison. Alas ! woe to me ! that very lady has become a changed thing by the power of fate, a strange being of prior all comnact Alas ! the reverse of destiny.

---

( एम् ए उपनाम पण्डित श्रीयुक्त राजेन्द्रचन्द्र शास्त्रिणः प्राप्तम् । )

## TRANSLATION.

## VISHNU SAMHITA.

### CHAPTER XXXI.

**विष्णुसंहिता स्मृतिशास्त्रम् ।**

एकत्रिंशोऽध्यायः ।

त्रयः पुरुषस्यातिगुरवो भवन्ति । १ । माता पिता आचार्य्यश्च । २ । तेषां नित्यमेव शुश्रूषुणा भवितव्यम् । ३ । यत्ते ब्रूयुस्तत् कुर्य्यात् । ४ । तेषां प्रियहितमाचरेत् । ५ । न तैरननुज्ञातः किञ्चिदपि कुर्य्यात् । ६ ।

सर्व्वे तस्यादृता धर्म्मा
यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते
सर्व्वास्तस्याफलाः क्रियाः ॥ ७ ॥

1. A man has three highest gurus (1) *viz* the father, the mother and acharyya (preceptor, religious and secular)(2). He should be always ready to render service to them(3) and do what they might ask him to do(4). He should do what is good and agreeable to them(5) and should do nothing without their permission(6). He who respects these three may be said to respect all dharma but he who slights them loses the merit of all his acts.(7).

( क्रमशः )

श्रीश्रीदुर्गा
शरणम् ।

# संस्कृतचन्द्रिका ।

## मङ्गलाचरणम् ।

ॐ नमो गणेशाय ।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव ।
मायावलम्बते सेयमम्बा श्रीशिवसुन्दरी ॥

दूरादपेतमुकुटैर्व्विनतैः शिरोभि-
र्ब्रह्मादिभिः किणितमग्रनिघृष्टमिष्टम् ।
अङ्गुष्ठमाङ्घ्रिकमुदूढ़मृदुप्रवालं
स्पृष्ट्वा मुहुर्भवतु शीतलमम्ब ! चित्तम् ॥

श्रीरस्तु नः स्तुतिकृतां श्रुतिसत्प्रसूतिः
शुक्लेषु हंसकमलेषु मुदं वहन्ती ।
वैशाखमासजनि-संस्कृतचन्द्रिकासु
वाणी सुधांशुसुषमा नववाङ्मयीषु ॥

"भ्रमरीकवरीभार-भ्रमरी-मुखरीकृतम् ।
दूरीकरोतु दुरितं गौरीचरणपङ्कजम् ॥"

# सूचना ।

जगत्यस्मिन् सुखं दुःखं वा किमपि न चिरमवतिष्ठते । न सर्व्वदा दिवसो विराजते, यामिनी वा न प्रवर्त्तते । न वा सदा शर्व्वरी शशाङ्कशोभना, न वा घोरतिमिरभीषणा । न सततं शरद् वसन्तो वा समयः सुखयति मानुषान्, न च शीतो वर्षा वा निरन्तरमुद्वेजयन्ति जनान् । चन्द्रिकापि वर्षासु धाराधरनिकरैश्छादिता विलुप्तशोभापि यथा सहजविमलं शारदीयनभोमण्डलं प्राप्य पुनरपि जगत् प्लावयति । कोकिलापि वर्षासु शरत्सु हेमन्तेषु च धृतमौनव्रता पुनर्वसन्तेन प्रियसुहृदा दत्तोत्साहा सह कोकिलेन मधुरं गायति, प्रीणयति च प्राणिगणान् । तथा "संस्कृतचन्द्रिका" अपि सुदूरदेशे विचरन्ती केनापि दैवहतकेन संरुद्धा प्रतिनिवृत्ता च मदीयहृदयशय्यायां सुदीर्घदिनानि सुप्ता बभूव । गते च कियति काले श्रीमदीश्वरेच्छया महात्मना श्रीयुक्त रमेशचन्द्रमित्रेण मित्रेणेव श्रीयुक्त गुरुदासवन्द्योपाध्यायेन उपाध्यायेनेव च सा "संस्कृतचन्द्रिका" पुनर्जागरिता, समाज्ञप्ता च पुनर्भारतवर्षस्य यशोगानाय, प्रोत्साहिता च दिगन्तं पर्य्यटितुम् । तावेव प्राक्तनवर्त्तमानौ महाधर्म्माधिकरणिकौ प्रबलं बलमवलम्बमाना, पृष्ठपोषकौ च तौ मन्यमाना, तयोरादेशञ्च शिरसि वहन्ती संस्कृतचन्द्रिका पुनः प्रचलितुमारभते ।

## विषयाः ।

दर्शनशास्त्रमर्म्मार्थः तदीयपदार्थविचारः । उपनिषद्भक्तिशास्त्राद्यालोचना । महाकाव्यादीनामलङ्कारादिनिरूपणम् ।

स्कुलच्छात्राय पुरातना नूतनाश्च प्रश्नाः। संस्कृतैंरेजीभाषयो-रन्योन्यमनुवादादर्शः। सनीतिहास्यरसप्रसङ्गः। अन्येऽपि साधारणोपकारका विषयाश्चात्र निवेश्यन्ते।

## उद्देश्यम्।

विना क्लेशमुपदेशञ्च केवलमस्याः पाठमहिम्ना संस्कृतभाषाभ्यासः दार्शनिकविषयादिपरिज्ञानमानन्दश्च निरतिशय इति।

---

## अथ सांख्यदर्शनस्थूलार्थः।

यद्गुणेन गुणिनो भवन्त्यलम्
निर्गुणा हरिविरिञ्चिशङ्कराः।
स्थावरादिजगताम्प्रसूतिकाम्
जन्मनाशरहितामजां भजे॥

षसां दर्शनानां मध्ये सांख्यदर्शनमेव क्षितौ प्राक् प्रादुर्भूतं प्रशस्तञ्च। वेदेऽपि तत्त्वज्ञानसाधनत्वेन प्रशस्तत्वमस्य दर्शितम्(१)। विष्णोरवतारो देवहूतिजठरजातो महर्षिः श्रीमत्-

---

(१) "नित्यो नित्यानां चेतनश्चेतनानां
एको बहूनां यो विदधाति कामान्।
तत्कारणं सांख्ययोगाधिगम्यं
ज्ञात्वा देवं मुच्यते सर्व्वपाशैः॥

इति कृष्णयजुर्व्वेदीयश्वेताश्वतरोपनिषत्।६ अं।१३ श्लं॥ "सांख्ययोगाधिगम्यं सम्यक् ख्यायते प्रकाश्यते आत्मतत्त्वं येन विज्ञानेन तत् सांख्यम्। योगो जीवपरमतादात्म्यफलोऽष्टाङ्गरूपो वैदिककर्म्मानुष्ठानादिरूपो वा।" इति शङ्करानन्दकृतश्वेताश्वतरोपनिषद्दीपिका।६।१३ श्लं।

कपिलश्च तदाविष्कर्त्ता । अतएव तत्रालोचनीयेषु दर्शनेषु प्रथमं सांख्यदर्शनमालोच्यते । तत्रापि तस्यातीवगभीरार्थतया प्रथमत एव सुविस्तरवर्णने बुभुत्सूनां धैर्य्यच्युतिः अशक्यप्रवेशत्वं विरक्तिश्च समुत्पद्येत । तस्मात् पूर्व्वं स्थूलरूपेण तात्पर्य्यव्याख्यानमेव श्रेयो मन्यते । क्रमशस्तु सर्व्वानेव पदार्थान् विशदीकृत्य बोधयितुं प्रयतामहे ।

अथ दर्शनस्यास्य किमिति "सांख्यमिति" नाम ? संख्याकरणात् सांख्यमित्युच्यते । अत्र संख्याशब्दस्यार्थद्वयमभिप्रेतम् । आत्मज्ञानरूपा संख्या । एकत्वादिरूपा च संख्या (२) । तेन प्रकृतिपुरुषज्ञानरूपसंख्यायाः प्रतिपादनात्, प्रकृतिमहदहङ्कारादिचतुर्व्विंशतितत्त्वरूपसंख्यायाश्च प्रतिपादनात् अस्य दर्शनस्य "सांख्यमिति" नाम ।

इह जगति हीनदीनकृपणरुग्नाः प्राणिनोऽमरनरपतयो वा किमधिकम् आकीटदेवराजप्रभृतयः सर्व्वे एव सुखार्थं प्रयतन्ते । यत् किमपि आहारविहारादिकं दैनिकं कर्म्म कुर्म्महे, तत् केवलं सुखार्थमेवात्मनः । प्राणिनस्तु सुखभोगायैव निरन्तरमितस्ततो

---

सांख्यस्वरूपं यथा,—हेमाद्रिधृतं चतुर्व्वर्गचिन्तामणौ व्रतखण्डे १ अध्याये आदित्यपुराणम् ।

"सांख्यं तत्कपिलं बभ्रु वक्रमुज्ज्वलतुन्दिलम् ।
जाप्यदण्डधरं दीर्घनखलोमजटाधरम् ॥"

(२)"सम्यक् ख्यायते प्रकाश्यते वस्तुतत्त्वमनया संख्या सम्यक्ज्ञानम् ॥"
गीतायाम् । २ । ३९ । स्वामी ॥ उपरितनोपनिषद्भाष्यञ्च ॥
"संख्यां प्रकुर्व्वते यस्मात् प्रकृतिञ्च प्रचक्षते ।
तत्त्वानि च चतुर्व्विंशत्तेन सांख्यं प्रकीर्त्तितम् ॥"
इति सांख्यप्रवचने ॥

बंभ्रम्यन्ते। धनं राज्यमैश्वर्य्यं पुत्रपौत्रकलत्रमित्राणि लब्ध्वापि, क्रमशः पर्णकुटीरात् एकतलं द्वितलं त्रितलञ्च प्रासादमधिवसन्तोऽपि, समासाद्य च वस्त्रमलङ्कारं यानमासनं, किमधिकं नरत्वं देवत्वञ्च प्राप्यापि, न परितृप्यन्ति प्राणिनः न वा शान्तिं लभन्ते। किन्तु अनुमिमते ते अतःपरमपि किमपि सुखमस्त्येव इति। मत्वा च तदर्थं लोलुपाः प्राणिनो निरन्तरं परिभ्रमन्ति।

अत्रैकमेव कारणं निरूपितं, यत्राशुक्तात् धनादिविषयनिवहात् विशुद्धं दुःखसंस्रवशून्यं सुखं नोत्पद्यते। प्रत्युत ते च विषया दुःखानुविद्धसुखस्यैव हेतवः। प्राणिनस्तु दुःखप्रदिग्धं सुखमनुभूयापि न कृतार्थीभवन्ति। परन्तु चिराय दुःखनिवृत्तये अर्थात् मुक्तये प्रयतन्ते। न्यायवैशेषिकमते दुःखं जीवात्मनो धर्म्मः (१)। सांख्य-पातञ्जल-वेदान्तमते दुःखं बुद्धिधर्म्मः, कामादिसाहचर्य्यात् (२)। भवतु दुःखं बुद्धिधर्म्मः। किन्तु बुद्धिरेव दुःखरूपेण परिणमते। ततस्तु दुःखाकारेण परिणताया बुद्धेः प्रतिबिम्बं स्वच्छे पुरुषे पतति। सुतरां प्रतिबिम्बितदुःखं पुरुषे वर्त्तत एव। अनया रीत्या अहं सुखी अहं दुःखी इत्येवं दुःखं आत्मधर्म्म इत्यपि वक्तुं युज्यते।

घटादिभिः पदार्थैः प्रथमं सान्निध्यात् इन्द्रियाणि संयुज्यन्ते। तैश्च सह बुद्धेः सन्निकर्षे तम-आवरणशक्तिरपसरति स्फुरति च सत्त्वम्। परिणमते च इन्द्रियैः सह बुद्धिर्घटाद्याकारेण।

---

(१) "बुद्ध्यादिषट्कं संख्यादिपञ्चकं भावना तथा।
धर्म्माधर्म्मौ गुणा एते आत्मनः स्युश्चतुर्दश॥" इति भाषापरिच्छेदः॥

(२) यथा, बृहदारण्यके १माध्याये ५म ब्राह्मणे ३या ऋक्। "कामः सङ्कल्पो विचिकित्सा श्रद्धाश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्व्वं मन एव।"

तादृशी च बुद्धिः चेतने पुरुषे प्रतिविम्बति। प्रकाशते च पुरुषस्य स्वप्रकाशरूपस्य छायापातात्। एष एव विषयज्ञानप्रकारः। वास्तविकदुःखन्तु न पुरुषस्य परन्तु बुद्धेरेव धर्म्मः।

प्रतिविम्बितदुःखसंस्रवेणापि पुरुषः क्लिश्यते। अतो यथा दुःखस्य प्रतिविम्बोऽपि पुरुषे न पतेत् तदर्थमेव पुरुषप्रयत्नः। सर्व्वमेव दुःखं क्षणिकं, तच्च प्रथमक्षणं उत्पद्यते, द्वितीयक्षणं तिष्ठति, तृतीयक्षणे तु दुःखं स्वयं नश्यति। अतएव वर्त्तमानावस्थस्य दुःखस्य निवृत्तये नास्ति प्रयत्नापेक्षा। किन्तु भविष्यद्दुःखस्य सूक्ष्मावस्थया बुद्धौ स्थितस्य विषयसम्बन्धात् प्रकाशमानस्य निवृत्तये पुरुषकारोऽपेक्षणीयः।

सांख्याचार्य्यः कपिलमहर्षिः सत्पदार्थवादी परिणामवादी च न स्वीकरोति कस्यापि पदार्थस्य विनाशम्। असत्पदार्थो नोत्पद्यते, न वा सत्पदार्थो विनश्यति। परन्तु एतन्मते उपादानकारणादाविर्भाव उत्पत्तिः तत्तद्वस्तूनाम्। एवं उपादानकारणे तिरोभावः—सूक्ष्मीभावः—अव्यक्तीभावः—सङ्कुचितीभवनं—लुक्कायनं वा विनाशः तत्तद्वस्तूनाम्। तथाहि, सूत्रावस्थायामपि वस्त्रं तेषु सूत्रेषु वर्त्तत एव, किन्तु न दृश्यते आतानवितानसंयोगरूपकारणाभावात्। यदा खलु आतानवितानसंयोगेन सूत्राणि विस्तृतानि भवन्ति तदा तेभ्यः सूत्रेभ्यः वस्त्रमाविर्भूतमुपलभ्यते। यदा पुनस्तानि सूत्राणि विश्लिष्टानि क्रियन्ते, तदा पुनस्तेष्वेव कारणेषु सूत्रेषु वस्त्रं तिरोभवति। अयमेव सांख्यनये उत्पत्तिर्व्विनाशश्च कथितः।

दुःखविनाशोऽपि दुःखस्योपादानकारणे लयः—तिरोभावः। दुःखकारणन्तु चित्तम्। अतो यावत् चित्तं स्थास्यति तावद्दुःख-

मपि । चित्तनाशे सति कारणाभावात् न कदापि पुनर्दुःख-मुत्पत्स्यते(१) । सति तु दुःखाङ्के चित्ते उपादानकारण-सद्भावात् कञ्चित्कालं निवृत्तमपि दुःखं पुनराविर्भविष्यति ।

असंख्यस्य दुःखस्य निमित्तकारणमप्यसंख्यम् । यथा,—रोग-जनितदुःखस्य रोगः कारणम् । दारिद्र्यदुःखस्य धनाभावः कारणम् । शत्रुजनितदुःखस्य शत्रुः कारणम् ।

रोगे निवृत्ते सति कञ्चित्कालं रोगजनितदुःखं तिरोभवति, न तु दारिद्र्यदुःखम् । धने समुपार्ज्जिते दारिद्र्यदुःखं निवर्त्तते न तु शत्रुजनितदुःखम् । कथमिति चेत् ? दुःखस्य मूलकारणं चित्तं यतो वर्त्तते । सति चित्ते दुःखमपि अपरिहार्य्यं भवेत् । चित्तनाशे तु दुःखस्यामूलमुन्मूलनात् न कदाचिदपि किञ्चिदपि दुःखं जायते । इयमेवात्यन्तिकी दुःखनिवृत्तिः सैव मुक्तिः ।

आत्यन्तिकदुःखनिवृत्तिस्तु औषधादिभिर्लौकिकसाधनैर्न घटते । नापि अश्वमेधादिभिर्यज्ञैश्चिराय दुःखं निवर्त्तते । नापि मणिमन्त्रादिभिरपि अवश्यं निवर्त्तेत एव । यदि वा निवर्त्तेत तदा कालान्तरे पुनरुत्पद्येत । अतः समूलदुःखनिवृत्तौ चित्तनिवृत्तिः कारणम् । चित्तनिवृत्तौ प्रकृतिपुरुषतत्त्वविवेकः कारणम् । तत्त्व-विवेके च सांख्यशास्त्रं कारणम् । इति सांख्यशास्त्रप्रवृत्तिरिति सांख्याचार्य्याणामाशयः ।

यदा खलु "अहमात्मा सच्चिदानन्दरूपः नित्यमुक्तस्वभावः । दुःखन्तु न मे धर्म्मः । तत्तु बुद्धेरेव । बुद्धिस्तु जड़ा अहन्तु चैतन्यरूपः । नाहं बुद्धिः नाहमहङ्कारः नाहं शब्द-स्पर्श-रूप-रस-गन्धतन्-

(१) चित्तनाशप्रकारस्तु स्पष्टीकरिष्यति ।

मात्राणि। नाहं श्रोत्रं त्वक् चक्षुः रसनं घ्राणं वा। नाहं वाक् पाणिः पादः पायुरुपस्थं वा। नाहं प्राणोऽपानः समान उदानो व्यानो वा पञ्च प्राणाः। नाहं आकाशः पवनोऽनलः सलिलं धरणी वा पञ्च महाभूतानि। तत् सर्व्वं प्राकृतं अहन्तु प्रकृतेर्भिन्नः। अहन्तु बुद्धेः पृथक्। बुद्धिरपि मत्तः पृथक्। बुद्धिगतदुःखन्तु मयि प्रतिबिम्बितम्। दुःखप्रतिबिम्बपातेन कथमहं क्लेशमनुभवामि?" इत्येवं रूपं पुरुषस्य विवेचनं भवति, तदा विवेकेन अविवेके अपसारिते अविवेकमूलदुःखसहकृतचित्तस्य स्वकारणे प्रकृतौ लयात् पुरुषेण सह सम्बन्धविगमः।

एवमेव चित्तादेर्नाशात् आधाराभावात् कुत्र दुःखमुत्पद्येत, बुद्ध्या सह सम्बन्धापगमे कथं वा पुरुषे दुःखं प्रतिबिम्बेत्, विवेके समुत्पन्ने चित्तस्य तद्धर्म्मदुःखादेश्चात्यन्तनाशात् पुरुषः केवलः अखण्डानन्दः स्वस्वरूपः सुस्थस्तिष्ठति इदमेव कैवल्यम्।

दुःखन्तु त्रिविधम्। यथा,—आध्यात्मिकम् १ आधिभौतिकम् २ आधिदैविकञ्च ३।

१। तत्र आध्यात्मिकम् इत्यत्र आत्मशब्दस्यार्थद्वयं मनः शरीरञ्च तेन आत्मानं मनः अधिकृत्य यद्दुःखं उत्पद्यते तदेकविधमाध्यात्मिकम् (१)। यथा,—कामक्रोधलोभमोहविषादादिजनितं दुःखम्। इदन्तु दुःखं केवलं अभ्यन्तरमेव प्राणिनामुपतापयति, नहि बहिःकरचरणादिकम्। अतं इदं मानसमाध्यात्मिकम्।

अपरमाध्यात्मिकं—आत्मानं शरीरं अधिकृत्य यद्दुःखं उत्पद्यते तत् द्वितीयप्रकारमाध्यात्मिकं दुःखं शारीरम्। यथा,—

---

(१) "आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च।" इत्यमरः॥ पाणिनिमते ठक्। कातन्त्रे इकण्। मुग्धबोधे ष्णिकः प्रत्ययः।

वातपित्तश्लेष्मप्रकोपादिजन्यं ज्वरातिसारभगन्दरप्रमेहादिकम्। अनेन दुःखेन यथा शरीरे तापादिकं जायते, तथा मनोऽपि क्लिश्यते। किन्तु मानसिकदुःखं मनोमात्रजन्यम्। शारीरन्तू-भयजन्यमित्यनयोर्भेदः।

२। आधिभौतिकं—भूतानि प्राणिनोऽधिकृत्य प्रवृत्तमिति। यथा, दस्युतस्करपशुपक्षिसर्पादिकृतं दुःखम्।

३। आधिदैविकं—देवान् अधिकृत्य वर्त्तत इति आधिदैविकम्। यथा, विद्युदग्निशीतातपयक्षराक्षसग्रहजनितं दुःखम्। यद्यपि सर्व्वमेव दुःखं मानसिकं तथापि मनोमात्रजन्यत्वात्, मनः शरीरोभयजन्यत्वाच्च अनयोः शारीरमानसदुःखयोर्भेदः।

एवं त्रिविधेन दुःखेन समुत्पीड़ितं समग्रं जगदवलोकयन् परमकारुणिको भगवान् विष्णुः देवहूत्यां जन्म स्वीकृत्य कपिल इति नाम्ना प्रसिद्धिं गतः। ततश्च प्रकृतिपुरुषसंयोग एव मूलकारणं जगदुत्पत्तेरिति प्रतिपाद्य विषयभोगो न चिरमुक्तिकारणमिति परवैराग्य-वृत्तिनिरोधादिद्वारा (१) जीवान् विषयसुखेभ्यो निवर्त्तयन् उपदिष्टवान्—"अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" इत्यादि। विरचितवांश्च षड़ध्यायीरूपं सांख्यदर्शनम्। इदन्तु दर्शनं कपिलात् आसुरिः आसुरेः पञ्चशिखाचार्य्यः (२) तस्मादीश्वरकृष्णोऽधीतवान्।

(१) वृत्तिनिरोधात्तत्सिद्धिरिति सांख्यसूत्रम्। ३। ३१॥

(२) "सनकश्च सनन्दश्च तृतीयश्च सनातनः।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा॥"

इति सांख्यभाष्यम्। यथा च महाभारते शान्तिपर्व्वणि। २१८ अः।

"आसुरिर्म्मण्डले तस्मिन् प्रतिपेदे तदव्ययम्।
तस्य पञ्चशिखः शिष्यो मानुष्याः पयसा भृतः॥"

सांख्यशास्त्रे जड़चैतन्यभेदेन पदार्थद्वयं वर्णितम्। चेतनाः पुरुषाः। जड़ाः प्रकृत्यादयः। जन्ममरणादिव्यवस्थासिद्धये पुरुषा बहवः, प्रकृतिरेका। प्रकृत्यादयः त्रयोविंशतिः समष्टिरूपा जड़ाः पदार्थाः। अतएव ते उपभोग्याः। पुरुषस्तु भोक्ता। अस्मिन् शास्त्रे, चेतनः चित् चितिः चिच्छक्तिः विभुः आत्मा इत्यादिशब्दाः पुरुषवाचकाः। एवं पुरुषो गुणातीतः विवेकवान् अविषयः असाधारणः चेतनः अजननधर्म्मा च। प्रकृतिस्तु सत्त्व-रजस्तमसां साम्यावस्था इयमेव प्रलयावस्था। अधुना तु सृष्ट्यव-स्थायां गुणानां वैषम्यावस्था। एवं सा त्रिगुणमयी अविवेकिनी विषयः सामान्या प्रसवधर्म्मिणी च।

यथा वत्सस्य पोषणार्थं अचेतनस्यापि क्षीरस्य स्तुतिरूपा प्रवृत्तिर्दृश्यते। तथा पुरुषस्य भोगार्थं, चरमे मोक्षार्थञ्च अचेतनाया अपि प्रकृतेः प्रवृत्तिर्जायते। जड़ायास्तस्याः प्रवृत्तिं प्रति मिथ्या-ज्ञानजन्यसंस्कारसहकृता अनादिरविद्यैव हेतुः।

पुरुषसंयुक्ता च प्रकृतिः गुणत्रयसाम्यावस्थारूपिणी प्रथमं बुद्धि-(महत्) तत्त्वरूपेण परिणमते। तत्तु इदं वस्तु इत्थमेव, कर्त्तव्य-मेतन्मया इति निश्चयात्मिका वृत्तिविशिष्टान्तःकरणं महत्त्वसंज्ञकम्।

अस्य बुद्धितत्त्वस्य नामान्तरं महान्। हिरण्यगर्भः। विरिञ्चिः। विश्वरूपः। ब्रह्मा (१)।

(१) हिरण्यगर्भो भगवानेष बुद्धिरिति स्मृतः।
महानिति च योगेषु विरिञ्चिरिति चाप्युत॥
धृतं नैकात्मकं येन कृत्स्नं त्रैलोक्यमात्मना।
तथैव विश्वरूपत्वात् विश्वरूप इति श्रुतः॥
महान् प्रादुरभूत् ब्रह्मा कूटस्थो जगदङ्कुरः॥"
इति योगवार्त्तिके।२। १६ सूत्रम्॥

सा च बुद्धिः इदं मया कर्त्तव्यम्, अनेनैतत् कार्य्यं निष्पादयामि, अस्मिन् कार्य्ये अहं समर्थ इत्येवमभिमानात्मकवृत्तिविशिष्टान्तःकरणरूपाहङ्काररूपेण परिणमते। अहङ्कारस्तु शब्द-स्पर्शरूपरसगन्धतन्मात्ररूपेण, श्रोत्र-त्वक्-चक्षु-रसना-नासिका-ज्ञानेन्द्रियरूपेण, वाक्पाणिपादपायूपस्थ-कर्मेन्द्रियरूपेण च परिणमते। तन्मात्राणि च आकाशवायुतेजोजलपृथिवीतिस्थूल-भूतरूपेण परिणमन्ते।

तेभ्य एव चतुर्व्विंशतितत्त्वेभ्यः भौतिकब्रह्माण्डं निखिलं प्राणिमण्डलञ्च यथायथमुत्पन्नम्।

प्रकृतिश्च जननमरणादिरूपं स्वव्यापारनैपुण्यं पुनः पुनः पुरुषाय दर्शयित्वा पुनः पुनः सुखदुःखादिकं ज्ञापयित्वा तेषु तेषु असारेषु सांसारिकभोगेषु तस्य वैतृष्ण्यं जनयति। वैराग्ये तु समुत्पन्ने पुरुषस्य विवेके च जाते स्वकार्य्यप्रवृत्तौ प्रकृतिश्चरितार्था सती विरमति। ततश्च निवृत्तायां प्रकृतौ, प्रकृतेः सकाशात् उत्पन्नाः सकलपदार्थाः सुतरां निवर्त्तन्ते। अतः कार्य्यसहितायाः प्रकृतेर्निवृत्तये प्रयत्नः कर्त्तव्यः। प्रकृतिनिवृत्तौ पञ्चमहाभूतानि तन्मात्रेषु लीयन्ते। तन्मात्राणि एकादशेन्द्रियाणि च अहङ्कारे लीयन्ते। अहङ्कारो बुद्धौ लीयते। बुद्धिस्तु प्रकृतौ लीयते प्रकृतिस्तु न कस्मिन्नपि। इयमेव प्रलयावस्था। प्रकृतिनिवृत्तिश्च विवेक-ज्ञानसाध्या। अतो विवेकज्ञानाय शास्त्रमिदमारब्धम्।

वर्त्तमानसांख्यदर्शनं प्रति अनेके सन्दिहते इदं कपिलप्रणीतं न वेति। यतो न कस्मिन्नपि प्राचीनभाष्यादौ नोत्थापितं सांख्य-दर्शनसूत्रम्। किन्तु पञ्चशिखाचार्य्यस्य सूत्रं ईश्वरकृष्णस्य कारिका च बहुषु प्राचीनग्रन्थेषु दृश्यते कपिलप्रणीतन्तु

सांख्यदर्शनमिदानीमुच्छन्नम्। इदन्तु दर्शनं विज्ञानभिक्षुणा रचितमित्यपि वदन्ति केचित्। विज्ञानभिक्षुणापि,—

"कालार्कभक्षितं सांख्यशास्त्रं ज्ञानसुधाकरम्।
कलावशिष्टं भूयोऽपि पूरयिष्ये वचोऽमृतैः॥"

इत्येवं स्ववचनेन भङ्ग्या तत्प्रतिपादितम् इति॥

"न वयं षट्पदार्थवादिनो वैशेषिकादिवत्।" १।२५। सूत्रमिदं दृष्ट्वा केचिद्वदन्ति वैशेषिकदर्शनात् परमिदं सांख्यदर्शनं प्रादुर्भूतमिति। नैतत्तु मन्यामहे सम्यक् कारणम्। यदि सत्यमेव परमयोगिना कपिलेन तेन भगवतैव विरचितमिति स्वीकुर्य्याः तदा योगिना योगमहिम्ना अतीतवत् अनागतयुगसहस्रात् परमपि जनिष्यमानं वस्तु विलोक्य समुपनिबध्यते इत्यादि किं न रोचयेः। तेन हि "न वयं षट्पदार्थवादिनः।" इति सूत्रात् न कपिलस्य वैशेषिकदर्शनात् परं सांख्यदर्शनरचयितृत्वं युक्तम्। तथा च सांख्यतत्त्वकौमुद्याम्। ५। "आदिविदुषश्च कपिलस्य कल्पादौ कल्पान्तराधीतश्रुतिस्मरणसम्भवः सुप्तप्रबुद्धस्येव पूर्व्वेद्यु-रवगतार्थानामपरेद्युः।" तथाचावट्यजैगीषव्यसंवादे भगवान् जैगीषव्यो दशमहाकल्पवर्त्तिजन्मस्मरणमात्मन उवाच। "दशसु महाकल्पेषु विपरिवर्त्तमानेन मया।" इत्यादि ग्रन्थसन्दर्भेण॥

यद्वा सांख्यदर्शनपदार्थाः पूर्व्वमेव व्यवस्थापिताः भगवता कपिलेन। किन्तु शिष्यप्रशिष्यपरम्परया ते पदार्था मुखत एव समभ्यस्ताः न तु पूर्व्वं लिखिताः। वैशेषिकदर्शनात् परन्तु तत्तत्सूत्रादिकं विरचय्य पत्रारूढ़ीकृताः। एवं सति "न वयं षट्पदार्थवादिनो वैशेषिकादिवत्।" इति दृष्टान्तदर्शनेऽपि न कश्चित् विसंवादः॥

# अथ विद्यासुखविक्रमोपार्ज्जनमन्त्राः ।



नो वयं केवलं पुरुषकारवादिनः, न वा केवलमदृष्टवादिनश्च। परन्तु मतमस्माकं दैवं पुरुषकारश्च कार्य्यसिद्धौ निदानं नृणामिति। केचिदत्र वदन्ति तीव्रेण दैवादिनिर्भरेणापि सिद्ध्यति कार्य्यम्। तीव्रेण पुरुषकारेणापि सम्पद्यते तदिति। यत्र तु दैवादाविव निर्भरस्तत्र न पुरुषकारापेक्षा। यत्र च पुरुषकार एव निर्भरस्तत्र नापेक्षणीयो दैवादिः।

यत्र तु दैव एव निर्भरस्तत्र न पुरुषकारापेक्षा। यथा,— अजगरः, स खलु वृहत्कायः चलितुमशक्तः सृष्ट ईश्वरेण। सुतरां इतस्ततः पर्य्यटन् मण्डूकमाहर्त्तुं अन्यविधां वा वृत्तिमुपकल्पयितुं अन्यविलेशय इव नालम्। अहो स हि अचलकलेवरोऽजगरः सहते पदमर्द्दनं परेषाम्। स्वशरीरोपरिजातं महीरुहादिकमपि निष्कासितुं स न प्रभवति। यत्रैव जायते तत्रैव तिष्ठति। तस्य हि भक्षणार्थं मुखकुहरं सुदीर्घप्रश्वासञ्च प्रदत्तवान् परमेश्वरः। तेन हि प्रश्वासवेगेनाकृष्टा ईश्वरप्रेरिता अनतिदूरे विचरन्तः पशवः तस्य मुखकुहरे प्रविशन्ति। एवमेवाजगरस्य तस्य जीविका निर्व्वहति।

अपि च, मार्ज्जारशावकः विना हि पुरुषकारं केवलं दैवनिर्भरेण सुखं जीवति। तथाहि सद्यःप्रसूतो मार्जारपोतः अस्फुटितनयनत्वात् स्वयं न शक्नोति क्षुधं तृष्णां वा शमयितुम् ऋते मातरम्। एवं विदित्वैव "माँओ माँओ" इति मार्ज्जारदारको

निरन्तरं मातरमभिरौति। मार्जारी अपि सुतस्नेहपरतन्त्वा क्षुत्पिपासाजनितं तनयस्य क्लेशमनुमाय खाद्यमुद्गिरति वितरति च स्तन्यम्। कदाचिद्वा भये समुपजाते मार्जारी दन्ताग्रैः शिथिलं दशती भीता च पतनभेदाभ्यां तनयं नयति, रक्षति च जीर्ण-चुल्लिकायां काष्ठोलान्तर्व्वा। निश्चयेन जानाति मार्जारशावकः, नास्ति मे जनन्या विना कोऽप्यन्यो रक्षयिता इति। मातरि निर्भरेण सुखेन गमयति वासरान्, न कामपि चेष्टामपेक्षते।

यत्र च पुरुषकार एव निर्भरस्तत्र नापेक्ष्यते दैवम्। यथा,—वानरबालकः। तथा हि वानरबालकस्य मातुरुदरात् करौ प्रथमं निःसरतः। स तु वानरशिशुः मर्कटीजठर एव तिष्ठन् इतस्ततः सञ्चालयति अर्द्धनिर्गतौ करौ। सञ्चालिताभ्यां पाणिभ्यां वानरदारको यावत् विटपादिकमवलम्बते, तावत् वानरी शाखायाः शाखान्तरमुत्प्लवते। सद्यः प्रसूतस्तु वानरशावकस्तत्-क्षणमेव कोमलं फलं पल्लवञ्च खादति। समीपवर्त्तिनीञ्च वानरीं स्वयमेव वक्षसि संवेष्टते। गच्छति च स्थानात् स्थानान्तरमिति। उदराभ्यन्तरे स्थित एव समाश्रितपुरुषकारो वानरबालको विना दैवनिर्भरं निष्पादयति कार्य्यम्।

मार्जारशिशोर्म्मर्कटपोतस्य च भवतु तथाविधा कार्य्यनिष्पत्तिः। अस्माकं पुनर्नास्ति ईश्वरेऽपि दृढ़निर्भरः, न वा पुरुषकारेऽपि तीव्रप्रयत्नः। सुतरामभिलषितसिद्धौ विघ्ना अस्मान् वाधन्ते। अतएव अस्माकं किञ्चित् दैवं कियानपि पुरुषकारश्च कार्य्यसिद्धौ कारणं मन्यते। ईश्वरेणास्मभ्यं बुद्धिः प्रदत्ता विचारयितुम्, मनः प्रदत्तं कल्पयितुम्, इन्द्रियाणि प्रदत्तान्यालोचयितुम्। एवं वाग्वक्तुं, पादौ गन्तुं, करौ च ग्रहीतुं प्रदत्तौ। अतएवोक्तम्।

"उद्यमेनैव सिध्यन्ति कार्य्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥"

अतएव सर्व्वथा उद्यमः कर्त्तव्यः ।

ईश्वरप्रदत्तानामिन्द्रियादीनां चेष्टाया अतिरिक्तविषयेष्वेव दैवस्य प्राबल्यं दर्शितं यथा,—

"कैवर्त्तकर्कशकरात् शफरश्च्युतोऽपि
जाले पुनर्निपतितः शफरो विपाकः ।
यत्नात्ततो विगलितो गिलितो बकेन
वामे विधौ वद कथं विपदां निवृत्तिः ॥"

अतएव दैवमप्यनुकूलतया अवलम्बनीयम् । दैवानुकूल्याय च यथाशास्त्रं ईश्वरमाराधयेत्, मण्यौषधादींश्च धारयेत् । अतएवानुमीयते यत्र स्वत एव दैवं नानुकूलं, तत्र शास्त्रीयविधानेन पुरुषकारेण प्रत्यनुकूलनीयं दैवम् । तथाप्यारब्धं कार्य्यं नैव निवार्य्यम् पुरुषसिंहैः । यथोक्तम् ।

"आरभ्यते न खलु विघ्नभयेन नीचैः-
रारभ्य विघ्ननिहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमगुणास्त्वमिवोद्वहन्ति ॥"

(इत्येको मन्त्रः ॥)

तत्र च आरब्धेष्वपि साधुषु विद्यार्जनादिषु कार्य्येषु यथा च पित्रादिगुरुजनाः प्रसीदन्ति, अनुमोदन्ते च तानि कर्म्माणि, विद्यासुखविक्रमार्थिभिर्ब्बालकैः सततं तथैव सावहितैर्भीतैश्च व्यवहर्त्तव्यम् । न तु ढाकानगरीस्थितैः "अभिभावकनिवारिणी"-सभायाः सभ्यैरिव भवितव्यम् । यथोक्तम् ।

"अहेरिव गणाद्भीतो मिष्टान्नाच्च विषादिव।
राक्षसीभ्य इव स्त्रीभ्य: स विद्यामधिगच्छति॥"

इति द्वितीयो मन्त्र:॥

ये च विद्यार्थिनो बालका: पित्रादीनभिभावकान् नाभिमन्यन्ते, ते अचिरेणैव लोकविद्विष्टा दुष्कीर्त्तयो विफलमनस्काश्च भवेयु:। उत्पथप्रतिपन्नाश्च विद्याया: सुदूरं प्रभ्रंसन्ते।

ये च विद्यार्थिनो बालका: मिष्टान्नलोलुपा:, बुभुक्षया क्षिप्तप्राया: धूलिकर्करमिश्राणि अपवित्राणि विपणिमिष्टान्नानि वा, कुटुम्बगृहे निमन्त्रणादौ व्यापृता वा आकण्ठमुदरं पूरयन्ति अचलनासमन्दाश्च हस्तपादौ प्रसार्य्य शेरते, श्वासरुग्ना इव निश्वसन्ति, एतावदेव तेषां दैनिकं कार्य्यमुदेति। तेषामचिरेणैव दिवसेन मन्दाग्निना पीड्यमानानां ऊर्द्धमुखेन अजीर्णान्नानि, अधोमुखेन च विकृतमलानि उद्गिरतामध्ययनविघ्ना: समुपतिष्ठन्ते। विविधरोगेनाभिभूयन्ते च ते। अतो मिष्टान्नभोगलोभव्यसनं परिहर्त्तव्यम्।

ये च विद्यार्थिनो नारीं कुहकिनीं राक्षसीमिव दृष्ट्वा भीतभीता नात्मानं गोपयन्ति। तेषामजानतामिव नार्य्यो मनोबुद्धिं धैर्य्यं शौर्य्यं लज्जां बलं मानं धनानि च समूलमपहरन्ति, दैन्यं रोगं शोकमनुतापं मूर्खत्वञ्च प्रत्यर्पयन्ति। अतो नार्य्या दृष्टिपथेऽपि न गन्तव्यं न स्थातव्यञ्च। अतस्तत्रान्धवत् पङ्गुवच्च व्यवहर्त्तव्यम्।

अपि च। हे विद्यार्थिन:! जानन्तु निश्चितं, चिन्तयन्तु निरन्तरं, यदि सुखमनुभवितुं यशो लब्धुं पुरुषगणनायां स्थानमधिकर्त्तुञ्च स्पृहयथ, तदा,—

"सर्व्वं परवशं दुःखं सर्व्वमात्मवशं सुखम्।
एतद्विद्यात् समासेन लक्षणं सुखदुःखयोः॥"

इति तृतीयो मन्त्र इति॥

ये खलु बालकाः सुखं जीवितुं कामयेरन् विमलं यशो वाञ्छेयुः, लोके आत्मानं पुरुषं प्रतिपादयितुञ्च यतेरन्। ते सदा परमुखापेक्षिणः शृङ्खलबद्धाः कुक्कुरा इव नो भवेयुः। परन्तु स्वात्मावलम्बनमेव कुर्य्युः। "स्वभुजोपार्जितं शाकान्नमपि दिनान्ते देवभोग्यममृतमिव भोक्ष्यामहे इति।" सततं स्मर्य्युः।

अत्र पशुषु दृष्टान्तमेकं दर्शयामः। स्वभाव एष वन्यसिंहानाम्, यत्परैर्निहत मृगादीन् नाश्नन्ति ते। किमधिकं सिंहतनयाः बालभावमतिक्रान्ताः प्रारब्धयौवनाः पित्रा निपातितमपि हस्तिनं न स्वीकुर्व्वते, परन्तु स्वयमेव हत्वा प्राणिनं, जीविकां कल्पयन्ति। प्रदर्शयन्ते च पितरं 'अहमपि सिंहशावक' इति विक्रमम्। विलोक्य च तथाविधं विक्रममात्मजस्य सिंहोनिरतिशयमानन्दमनुभवति। यथोक्तम्।

"मदसिक्तमुखैर्मृगाधिपः करिभिर्व्वर्त्तयते स्वयं हतैः।
लघयन् खलु तेजसा जगत् न महानिच्छति भूतिमन्यतः॥"

इति चतुर्थो मन्त्रः॥

अस्य सुख्यान्वयः।

(मृगाधिपः स्वयं हतैः मदसिक्तमुखैः करिभिः वर्त्तयति। महान् तेजसा खलु जगत् लघयन् अन्यतो भूतिं न इच्छति॥

अस्य प्रतिबोधकार्थः।

मृगाधिपः सिंहः। स्वयं हतैः स्वयं निहतैः। मदसिक्तमुखैः मदजलधौतवक्त्रैः मदमत्तैः न तु दुर्व्वलैः। करिभिः हस्तिभिः।

वर्त्तयते जीवति। महान् प्रशस्तान्तःकरणः जनः। तेजसा वीर्य्येण विक्रमेण जगत् लोकम् लघयन् तुच्छीकुर्व्वन्।—"अहमपि पुरुषः कथं परसुखापेक्षी स्याम्, कथमहमन्यस्मात् क्षुद्रो भवेयम्॥" इति प्रच्छन्नमभिमानं मनसि दधत्। अन्यतः अन्यस्मात् परतः भूतिं ऐश्वर्य्यं भोगम्। न इच्छति न अभिलषति॥)

अतएव हे विक्रमार्थिनः! यूयं यदि धनितनया अपि भवत, पितृवित्तैरपि भोगं निष्पादयितुं शक्नुध्वम्। किन्तु पितुर्म्मनसि यदा उदेति 'अयं मे पुत्त्रः कापुरुष इति।' तदा कथं प्रबोधयितव्यं स्वकीयं मनः। पितृवित्तमास्ते चेदास्ताम्। तत्तु हस्तादाच्छिद्य नान्यैरपहृियते, परन्तु स्वयमेवाधिकरिष्यते। अतः पितृवित्तेनैव-समयं नयत, परन्तु न असमर्थतया। यथा च पिता एवं विश्वसिति अयं मे पुत्त्रः सुपुरुषः न कापुरुष इति।

हे विद्यार्थिनः यैर्युष्माभिः चत्वारः प्रागुक्ता मन्त्राः प्रातर्मध्याह्नसायाह्ने च स्मर्य्यन्ताम्, अचिराद्द्रक्ष्यते विद्या विक्रमः सुखानि च युष्मान् अनुचरिष्यन्ति इति।

---

(श्रीयुक्त शिशिरकान्तसेनकविभूषणस्य पञ्जिकाया उद्धृतम्।)

## अथ कालाशुद्धिः।

शकाब्दाः १८१५। सन १३००।

"अस्मिन् वर्षे सौरवैशाखस्य प्रथमदिनात् सौरश्रावणस्य द्वादशदिनपर्य्यन्तमशुद्धम्। प्राग्वर्षीयानुवृत्ताद् गुरु-राहुयोगाद् गुरोर्वार्द्धक्यास्तमयबाल्याद् गुर्व्वादित्ययोगात् प्राग्वर्षीयानुवृत्तशुक्रमहास्तपश्चादुदय-बाल्यात् सौराषाढ़स्य मलमासत्वाद् गुरोरतीचारगत्या राश्यान्तरसम्बन्धाच्च। ततः सौरपौषस्य दशमदिनात् सौरमाघ-

स्याष्टमदिनं यावदशुद्धम्। गुरोर्वक्रगत्या राश्यन्तरसम्बन्धात्। ततःसौरमाघस्य सप्तदशदिनात् सौरफाल्गुनस्य दशमदिनं यावदशुद्धम्। शुक्रस्य वार्द्धक्यपादास्त-प्रागुदयवाल्येभ्यश्च। तदितरदिनानां शुद्धिरिति विदां मतम्।

मतान्तरे।—गुरोर्वक्रगत्या राश्यन्तरसम्बन्धात् "वक्रे पक्षचतुष्टयमिति" वचनात् सौरपौषस्य दशमदिनमारभ्य सौरफाल्गुनस्याष्टमदिनपर्य्यन्तमशुद्धम्।

ज्योतिर्व्विदाम्।

ज्योतिःशेखरोपाधिक—श्रीजीवानन्दशर्म्मणाम्।
कविभूषण-सिद्धान्तरत्नोपाधिक—श्रीप्राणानन्दशर्म्मणाम्।
काव्यनिध्युपाधिक—श्रीधीरानन्दशर्म्मणाम्।
गोविन्दपुरवास्तव्यानाम्।

श्रीमधुसूदन स्मृतिरत्नानाम्। श्रीकामाख्यानाथ तर्कवागीशानाम्।
श्रीराजकुमार न्यायरत्नानाम्। श्रीवीरसिंह शास्त्रिणाम्।
सम्मतिदातॄणाम्।

अस्मिन् वर्षे सौरवैशाखस्य प्रथमदिनात् सौराषाढ़स्य त्रिंशद्दिनपर्य्यन्तमशुद्धम्। प्राग्वर्षीयानुवृत्ताद् गुरुराहुयोगाद् गुरोर्व्वार्द्धक्यास्तमयवाल्याद् गुर्व्वादित्ययोगात्, प्राग्वर्षीयानुवृत्तशुक्रमहास्त-पश्चादुदयवाल्यात् सौराषाढ़स्य मलमासत्वाच्च। ततः सौरपौषस्य दशमदिनात् सौरफाल्गुनस्य दशमदिनं यावदशुद्धम्। गुरोर्व्वक्रगत्या राश्यन्तरसम्बन्धात् शुक्रस्य वार्द्धक्य-पादास्त-प्रागुदय वाल्येभ्यश्च। तदितरदिनानां शुद्धिः। गुरोरतीचारगत्या वृषराशिसम्बन्धात् न तस्य कालशुद्धिप्रयोजकता इति विदुषां परामर्शः।

श्रीमधुसूदन स्मृतिरत्नानाम्। श्रीराममय विद्याभूषण स्मृतितीर्थानाम्।
श्रीवीरेश्वर स्मृतितीर्थानाम्। श्रीहेमचन्द्र स्मृतितीर्थानाम्।
भट्टपल्लीनिवासिनाम्।"

## कालाशुद्धौ निषिद्धकर्म्माणि ।

आग्न्याधानरूपसंस्कारः देवादिप्रतिष्ठा ज्योतिष्टोमादिकाम्य-यज्ञः । दानं महादानं व्रतारम्भः व्रतप्रतिष्ठा देवतोद्देशेनकाम्य-वृषोत्सर्गः चूड़ाकरणमुपनयनं विवाहादिमाङ्गल्यं कर्म्म मुख्यकाला-तीतनामकरणान्नप्राशनादिकञ्च । राज्याभिषेकः अनादृष्टानादि देवतादर्शनं यात्रापुष्करण्यारम्भः कर्णवेधः नवपुरनवगृहप्रवेशः इष्टकादिनिर्म्मितदेवगृह राजगृहे उद्यानं सुरभवननरभवनारम्भः । विद्यारम्भः मणिदशनकणकादिनिर्म्मितालङ्कारधारणं वापीकूप-तड़ागानामारम्भः । आरामोत्सर्गः काम्योपासनं गङ्गातिरिक्ताना-दृष्टतीर्थस्नानं मन्त्रग्रहणं परीक्षा पुरश्चरणञ्च सावकाशकर्म्माणि सम्भवतुल्यकालकर्म्माणीति यावत् एतत्सर्व्वं समयाशुद्धौ नानुष्ठा-तव्यम् । अस्मिन् वर्षे गुरोररिगृहस्थितत्वेन उपनयनं न सम्भवति । किन्त्वत्यन्तापदि कृतेऽपि न तज्जन्य संस्कारासिद्धिः ।

---

## कालाशुद्धौ विहितकर्म्माणि ।

तानि च निरवकाशकर्म्माणि असम्भवतुल्यकालकर्म्माणीति यावत् । यथा, नित्यं नैमित्तिकं सङ्कल्पित यत् किञ्चिद्द्रव्यदान-शिवपूजादिकं प्रायश्चित्तं शान्तिस्वस्त्ययनादि निरवकाशकाम्य-कर्म्माण्यपि गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्म्मनामकरणान्न-प्राशननिष्क्रामणानि च स्व स्व मुख्यकाले एव कर्त्तव्यानि न तु गौणकालेऽपि । व्रतप्रतिष्ठा च स्व स्व पूर्णकाले कर्त्तव्या न तु तदनन्तरमपीति प्राचां सम्मतम् । इदमेव अस्मदभिप्रेतम् । शूल-पाणिरघुनन्दनमते व्रतप्रतिष्ठा पूर्णकालेऽपि समयाशुद्धौ न कर्त्त-

व्येति। प्रेतश्वषोत्सर्गप्रेतोद्दे शकदानादिकञ्चकर्त्तव्यम्। संक्रान्ति-पुण्यकाले सावकाशमपि काम्यं कर्म्म कालाशुद्धौ कर्त्तव्यमित्य-स्माकं सम्मतम्। तथा च तिथितत्त्वधृतस्कन्दपुराणम्।

"एकान्ततो मया प्रोक्ताः कालाः संक्रान्तिसंज्ञिताः।
नैतेषु विद्यतेऽनिष्टं यतस्वात्त्वयसंज्ञिताः॥
अश्वत्थापि यद्दत्तं कुपात्रेभ्योऽपि मानवैः।
अकालेऽपि हि तत् सर्व्वं सत्यमक्षयतां व्रजेत्॥"

अन्ये तु "संक्रान्तिर्याशुभा भवेत्" इत्यत्र शुभा इत्यस्य शुद्ध-समया इत्यर्थं कुर्व्वन्तः संक्रान्तिविहितव्रतारम्भश्च कालाशुद्धौ नानुष्ठातव्य इत्याहुः। (श्रीयुक्त जगच्चन्द्र सार्व्वभौमाः।) अपरे तु संक्रान्तिविहितकर्म्ममात्रमेव कालाशुद्धौ संक्रान्त्यामनुष्ठेयमित्यूचुः। (৺व्रजनाथ विद्यारत्नाः।) गयाश्राद्धं कालाशुद्धावपि कर्त्तव्यम्। व्रतारम्भप्रतिष्ठे च सिंहस्थे रवौ अनुष्ठातव्ये इत्यस्माकं सम्मतम्। अन्ये तु कालाशुद्धिमात्र एव व्रतारम्भप्रतिष्ठयोर्निषेधमाहुः। अत्र समयाशुद्धौ तत्तत्संक्रान्तिनिमित्तककर्म्माणि कार्य्याणि इति।

महामहोपध्यायानाम्
पूर्व्वस्थलीनिवासिनाम् श्रीकृष्णनाथ न्यायपञ्चाननानाम्।
वालिनिवासिनाम् श्रीगुरुचरण विद्याभूषणानाम्।

..............................

*First Examinatian in Arts 1892.*

---

## SANSKRIT POETRY.

*Paper set by* Pandit Haraprasad Sastri, M A,

*Examiners*— Babu Kailaschandra Datta, M. A.
,, Haridas Sastri, M. A.
,, Bireswar Chatterjee, M. A.

*The figures in the margin indicate full marks.*

1. (1.) Explain in English ;—

(*a.*) तस्य संवृतमन्त्रस्य गूढाकारेङ्गितस्य च ।
फलानुमेयाः प्रारम्भाः संस्काराः प्राक्तना इव ॥

(*b.*) बाहुप्रतिष्टम्भविवृद्धमन्युः
अभ्यर्णमागस्कृतमस्पृशद्भिः ।
राजा स्वतेजोभिरदह्यतान्तः
भोगीव मन्त्रौषधिरुद्धवीर्य्यः ॥

(2.) Explain the meanings of the words आकारः, इङ्गितं and संस्काराः. 3

(3.) Turn the second verse into the active voice. 3

(4.) Derive the word अभ्यर्णम्. 1

2. (I.) Explain in Sanskrit :—

(*a.*) धियः समग्रैः स गुणैरुदारधीः
क्रमाच्चतस्रश्चतुरर्णवोपमाः ।
ततार विद्याः पवनातिपातिभिः
दिशो हरिद्भिर्हरितामिवेश्वरः ।

(*b.*) काम्बोजाः समरे सोढुं तस्य वीर्य्यमनीश्वराः ।
गजालानपरिक्लिष्टैरक्षोटैः सार्द्धमानताः ।

(2.) Explain the Samasas in the above extract. 3

(3.) Who are the *Harits*, and why are they so called ? 1

(3.) Derive the word विद्या, and conjugate its root in लट्. 9

3. (1.) Translate into English :—

(*a.*) वङ्गानुत्खाय तरसा नेता नौसाधनोद्यतान् ।
निचखान जयस्तम्भान् गङ्गास्रोतोऽन्तरेषु सः ।

(*b.*) रूपं तदोजस्वि तदेव वीर्य्यम्
तदेव नैसर्गिकमुन्नतत्वम् ।
न कारणात् स्वाद् बिभिदे कुमारः
प्रवर्त्तितो दीप इव प्रदीपात् ॥

(*c.*) एवं तयोरध्वनि दैवयोगात्
आसेदुषोः सख्यमचिन्त्यहेतु ।

एको ययौ चैत्ररथप्रदेशान्
सौराज्यरम्यानपरो विदर्भान् ।

(2.) Derive the word आसेदुषो: decline it in the first and second case-endings, and conjugate it in लट् and लिट् third person.

(3.) Who is चित्ररथ (Chitraratha)? Derive सौराज्य, and explain the Samasa in सौराज्यरम्यान्. 3

4. Give the purport of the following in your own words in simple Sanskrit :—

(*a.*) शशंस तुल्यसत्त्वानां सैन्यघोषेऽप्यसम्भ्रमम् ।
गुहाशयानां सिंहानां परिवृत्यावलोकितम् ॥
तस्योत्सृष्टनिवासेषु कण्ठरज्जुक्षतत्वच: ।
गजवर्ष्म किरातेभ्य: शशंसुर्देवदारव: ॥

4. Translate into Sanskrit :—

Rishya Sring was the son of a Sage or Rishi. named Vibhandak, who lived in the forest, secluded from the world. It was designed by the father that the boy, too, should be a hermit and should never leave the forest or live among the abodes of men :

"Bred with the deer that round him roam.
The wood shall be that hermit's home.
To him no mortal shall be known
Except his holy sire alone."

(दशकुमारप्रश्ना अनुपयोगितया नोद्धृता: । )

---

*Trawolation.*

अस्ति भागीरथीतीरे पाटलीपुत्रनामधेयं नगरम् । तत्र सर्वस्वामिगुणोपेत: सुदर्शनो नाम नरपतिरासीत् । स भूपतिरेकदा केनापि पठ्यमानं श्लोकद्वयं शुश्राव।

On the banks of the river Bhagirathi there is a city called Pataliputra, where there was formerly a Raja adorned with every kingly virtue, whose name was Sudersana. One day he heard the two following verses as they were repeated by some one.

अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम् । सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥

यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥

इत्याकर्ण्यात्मनः पुत्राणां अनधिगतशास्त्राणां नित्यमुन्मार्गगामिनां शास्त्राननुष्ठानेनोद्विग्नमनाः स राजा चिन्तयामास ।

Here is a nice cow.

She is a good beast.

She does no harm.

She likes to lie still on the green.

She gives us milk.

The milk is sweet and makes us strong.

Some sweet-meats are made rom milk.

We should feed her with care.

She grazes in the field.

She does not eat flesh or fish like dogs.

She eats grass, leaves of trees, small plants and grain.

She has four legs and hoofs. like goats, horses and asses.

Her horns are bent.

She is tame.

I can go to her.

He, who is not possessed of learning which dispels many doubts, points out hidden things and is, as it were, the organ of sight to all, is a blind man.

Youth, abundant wealth, authority and inexperience is each of them, a source of ruin. What then must be the fate of him in whom all four are combined.

The Raja had no sooner heard these lines than he began to consider, with an afflicted heart, the situation of his sons who were yet unacyuainted with books and wandering in the paths of error.

इह काचित् श्रीमती वर्त्तते धेनुः

सा पशूनां अनुत्तमा ।

सा न कमप्यनर्थं करोति,

शाद्वले सुस्थिरतया शयितुं सा स्पृहयति ।

साऽस्मभ्यं पयो ददाति ।

तत्पयो हि स्वादु, आप्यायनञ्च ।

कतिपयानि मिष्टान्नानि दुग्धयोगेन सम्पाद्यन्ते ।

अस्माभिर्युज्यते यतमानैर्भवितुं सम्यगिमां भोजयितुम् ।

इयं हि क्षेत्रेषु चरति ।

सारमेयवत् न भुङ्क्ते सा मत्स्य मांसानि ।

तृणपत्रगुल्मशस्यान्येव साऽत्ति ।

अश्वमेषखराणामिव अस्या अपि चत्वारः पादाः शफानि च सन्ति ।

वक्रे च द्वे शृङ्गे स्तः ।

स्वत एवासौ वशमायाति ।

शक्नोम्यहं अस्याः सकाशं उपगन्तुम् ।

श्रीश्रीदुर्गा

शरणम्।

# संस्कृतचन्द्रिका।

## ( १८१५ शाक-भाद्रमासस्य। )

श्रीश्रीगणेशाय नमः।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव।

मायावलम्बते सेयमम्बा श्रीशिवसुन्दरी॥

## उद्भट-श्लोकाः।

देवेन्द्रमौलिमन्दार-मकरन्दकणारुणाः।

विघ्नं हरन्तु हेरम्ब-चरणाम्भोजरेणवः॥

"उत्तम-मध्यम-निकृष्टजनेषु मैत्री, यद्वच्छिलासु सिकतासु जलेषु रेखा।

वैरं तथाप्यधममध्यमसज्जनानां, यद्वच्छिलासु सिकतासु जलेषु रेखा॥२२॥"

"यदि सखि! याहि निकुञ्जं माधवचरणे निवेदनीयं नः।

युगशतकोटिनिमित्तं प्रेमाभिलुतं किमद्यैव॥२३॥"

"कः हरिः शिवे का च निकृष्टा, को बहुलार्थः किं रमणीयम्।

वद कातन्त्रे कीदृक्सूत्रं, "शिवे सेवा वा पररूपम्" ॥२४॥"

"काचं मणिं काञ्चनमेकसूत्रे ग्रथ्नन्ति मूढाः किमिदं विचित्रम्।

विशेषवित् पाणिनिरेकसूत्रे श्वानं युवानं मघवानमाह॥२५॥"

"उत्क्षिप्तं प्रतिचुम्बितं परमहो लीढं पुनश्चर्व्वितम्

क्षिप्तं वा लघु पल्वले तदपि भोःशिक्ते व्यथा मा कथाः।

भ्रातर्म्मौक्तिक! तावदेव कुशलं यद्वानरेणामुना

सारासारविवेचनव्यसनिना चूर्णीकृतं नाश्मना॥ २६ ॥"

"ममासीद्यन्नाशे मिहिरकुलमौलिस्तदकरोत्

न दूये सौमित्रे! न च मम कृते तापमकृथाः।

इयं दुर्व्वाराधिर्ज्जनयति महामोहलहरीम्

प्रतीतिर्य्योषाणां शिवशिव मयारोधि शरधिः॥ २७ ॥"

## राक्षस-प्रश्नः ।

हे विद्यार्थिनः ! ज्ञातमेतच्छ्रीमद्भिर्यत् बुद्धिः खलु जगति प्रशस्ततमा सर्व्वेभ्यो वस्तुभ्यः । बुद्धिबलेन समुत्तरति विपद्भ्यः, लभते सत्कारं, किमधिकं बुद्धिमहिम्ना जगज्जेतुमपि दुर्ब्बलोऽपि क्षमते, सा च बुद्धिः कर्म्माण्यनुसृत्य समुद्रिक्ता (१)। अतः सदा कर्म्मसु निरलसाः प्रवर्त्तध्वम् ।

अत्रेतिहासमेकं निशामयत ।

आसीत्त्रिलोकीतिलकः क्षितिमण्डलाखण्डलः पण्डितव्रातमर्य्यादकः सदा शास्त्रालोचनामृतह्रदावगाढ़ः श्रीमान् राजा विक्रमादित्यो नाम । तस्य नाम्ना सह यशो दिगन्तं व्याप्तवत् ।

एकदा कुम्भोदरी नाम काचित् राक्षसी सह भर्त्रा वक्रमतिना राक्षसेन संलपन्ती प्रसङ्गतस्तस्य विक्रमादित्यस्य नाम्नि उल्लिखति तस्य मांसं भक्षयामीति मतिश्चकार ।

ततः कुम्भोदरी कथयति नाथ ! तस्य महात्मनो विक्रमादित्यस्य विविधरसपुष्टं सिन्दूरद्रवशोणिताद्रं मांसं मा भक्षय, नोचेत् न किञ्चिदन्यद्भक्षयामि, प्राणांश्च त्यक्ष्यामि । तच्छ्रुत्वा वक्रमतिराह प्रिये ! नैतदनुरूपं भवत्या बुद्धिमत्याः, स खलु परमधार्म्मिको राजा निरर्थकं कथं हन्यते, विशेषतः स राजा समाराधिततालवेतालाभ्यां देवकल्पाभ्यां निरन्तरं संरक्षितः । ततः कुम्भोदरी कथयति, भवान् मत्सन्निधौ निजबुद्धिबलेन जगज्जेतुं शक्नोमीति नित्यं विकत्थते, अतो बुद्धिबलेन तं पराजयताम्, ततो मांसमुपहर, नो चेत् प्राणांस्त्यक्ष्यामि । ततः क्षणं विचिन्त्य, प्रियाचरणार्पितप्राणः वक्रमतिराह प्रिये ! प्रसीद, पराजयिष्ये विक्रमादित्यम्, भोजयिष्ये भवतीं तस्य कोमलं पललम्, दर्शयिष्ये बुद्धिप्राखर्य्यम्, इत्युक्त्वा स प्रस्थितः ।

(१) "श्रमानुसारिणी विद्या बुद्धिः कर्म्मानुसारिणी" इति ।

अत्र तु सकलाचलापालमौलिमालालालितचरणो राजा विक्रमादित्यः विक्रमेणादित्योऽपि द्वितीयश्चन्द्र इव नक्षत्रैः रत्नैः रसंख्यातैः परिवृतः नवरत्नराजितां सदसमध्यासीत्। तस्मिन्नेव क्षणे वक्रमतीराक्षसस्तत्रागत्य सभाप्रान्ते दण्डायमानश्च कृतानतिरुच्चैरुवाच महाराज! भवांस्तु पण्डिताग्रणीः समुन्मूलितशात्रवो वीतचिन्त्यः पण्डितमण्डलीमण्डित एव शास्त्रालोचनया दिवानिशं प्रमोदमनुभवति, यस्य खलु—

"धन्वन्तरिक्षपणकामरसिंहशङ्कु—
वेतालभट्टघटखर्परकालिदासाः।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य॥"

अस्यान्तु सभायां किञ्चित् पृच्छ्यते, अस्योत्तरं सप्ताहमध्ये कर्त्तव्यम्। नोचेत् सप्ताहानन्तरं भवन्तं हत्वा मांसमद्मि। तदाकर्ण्य विक्रमादित्यस्तस्य उत्साहं वर्द्धयन् आह—एवमस्तु एवमस्तु, पृच्छ्यतां प्रष्टव्यं पृच्छ्यतां प्रष्टव्यम्।

तच्छ्रुत्वा वक्रमतिरपृच्छत्—

**"कति मी, कति शी, कति मी, शी, ना"** इति (१)

विक्रमादित्यं तं प्रश्नं पृष्ट्वा वक्रमतिः प्रत्यगच्छत्। विक्रमादित्यानुमत्या च नवरत्नपण्डिताः षष्ठं दिनं यावत् तन्न तन्नेति कृत्वा चतुरो वेदान् चतुर्द्दशशास्त्राणि च ओतप्रोतं समुद्घाटयामासुः, परन्तु न प्रापुः क्वापि तं प्रश्नन्तदुत्तरञ्च, तेन हि ते स्वात्मानं शुशुचुः।

प्रतिज्ञया राजवधफलस्य प्रश्नस्यास्य यदि न कुर्य्यामुत्तरम्, तदा

---

(१) "मी" "शी" इति शब्दानुकरणम्, तदुत्तरं इति शब्दोऽध्याहार्य्यः तेन "मी" इति शब्दाः, "शी" इति शब्दाः इत्यर्थः। समुदयार्थस्तु कति कतिपये "मी" इति शब्दाः सन्ति। कतिपयाः "शी" इति शब्दा विद्यन्ते। कतिपयास्तु "मी" इति शब्दाः "शी" इति शब्दाश्च न वर्त्तन्ते किञ्चिद्वस्तुवाचकेषु शब्देषु इति प्रश्न इत्यर्थः।

धिगिदं जीवितम्, इत्येवं निश्चिन्वानः कालिदासः षष्ठदिवसे मर्त्तु-कामो गृहान्निरगात्। दुश्चिन्तयापहृतचित्तो व्रजन् गहनमविशत्। क्रमशस्तु घोरा रात्रिः प्रवृत्ता। तस्मिन्नेव गहने श्वापदसङ्कुले वटविटपिनमारुह्य स तस्थौ। दैवात्तत्रैव तस्य प्रष्टू राक्षसस्य वसतिरासीत्। तस्मिन्नेव क्षणे कुम्भोदरी राक्षसी वक्रमतिमाह—नाथ! विक्रमादित्यस्य "पिशितमाशयामीति" मामाश्वास्य किमप्राक्षीः, किंवा तदुत्तरं तत्कथय शृणोमि। वक्रमतिराह प्रिये! नैतदुचितम्।

"स्त्रीषु गुह्यं न वक्तव्यं रात्रौ नैव च नैव च।"

इति नीतिशास्त्रं निषेधति, तन्न ब्रवीमि। किन्तु—

"गृहीतार्थं न मुञ्चन्ति नारीवर्ल्लेरकच्छपाः।"

अवश्यमेव त्वया वक्तव्यं मया च श्रोतव्यम्। अन्यथा सार्द्धं त्वया नालपामीति वक्रमतिःपत्नी वक्रा बभूव। एकान्ततो निर्व्वध्नतीं तां निवारयितुमपारगो वक्रमति, क्रुद्धः कथयामास—

कति मी, कति शी, कति मी, शी, ना, इति प्रश्नः

पञ्च मी, पञ्च शी, पञ्च मी, शी, ना, इत्युत्तरम्। इति।

कालिदासस्तु तदुत्तरमाकर्ण्य प्रहृष्टचित्तः शनैः शनैरवरुह्य तरोः, स्वगृहं प्रतस्थे।

अपरेद्युः सभायां समवेतायां सहाष्टभीरत्नैर्व्विषण्णाननो राजा विक्रमादित्यः कालिदासागमनमार्गं विलोकयामास। तस्मिन्नेव काले हृष्टान्तःकरणो वक्रमतिः सह जायया कुम्भोदर्य्या तत्रोपस्थायाह महाराज! दीयतां ममोत्तरम्। ततस्तु प्रफुल्लमुखकमलः कालिदासः सकलैर्युगपगद्विलोकितः सदसं प्रविशन् राक्षसमाह "पुनरुच्यतां प्रश्न इति। ततो राक्षस उच्चैरुवाच।

"कति मी, कति शी, कति मी, शी, ना, इति।"

कालिदासोऽपि ईषद्धसन्—

"पञ्च मी, पञ्च शी, पञ्च मी, शी, ना॥

इत्युत्तरमकथयत्, श्रुत्वा तदुत्तरं धन्यवादं विधाय राक्षसः प्रतिप्रस्थितवान्।

ततः सभ्याः सर्व्वे कालिदासं पप्रच्छुः उत्तरार्थं प्रतिबोधय इति। कालिदासः कथयति श्रूयतामिति "पञ्च मी, पञ्च शी, पञ्च मी, शी, ना" इति प्रतिपदादिषु पञ्चदशसु तिथिषु पञ्चमी, सप्तमी, अष्टमी, नवमी, दशमी इति पञ्च मीशब्दा वर्त्तन्ते, एवं एकादशी, द्वादशी, त्रयोदशी, चतुर्द्दशी, पञ्चदशी इति पञ्च शीशब्दाः सन्ति। परन्तु प्रतिपत्, द्वितीया, तृतीया, चतुर्थी, षष्ठी इत्यत्र पञ्च मीशब्दाः शीशब्दाश्च नैव विद्यन्ते इति। श्रुत्वैतत् कालिदासवचनं सर्व्वे तं बुद्धिप्राखर्य्येण प्रशशंसुरिति॥

---

## ब्रह्मोपासना।

ये खलु निवृत्तसकलमोहा अनुष्ठितवर्णाश्रमधर्म्माः साधनचतुष्टयसम्पन्नाः ईश्वरानुगृहीताः धन्याः चिरसुखनिकेतनम् निरुपद्रवम् शान्तम् शिवम् चिदानन्दम् केवलानन्दम् अखण्डानन्दम् अमितानन्दम् आनमेवानन्दम् नेत्रान्तः स्थितमपि दर्शनपथातीतम्, करतलसंस्पृष्टमपि पराङ्पथक्रान्तम् दुर्ग्रहम्, हृदयस्य हृदयम् चक्षुषोश्चक्षुः, श्रोत्रयोः श्रोत्रम्, घ्राणयोर्घ्राणम्, रसनस्य रसनम्, त्वचस्त्वक्, प्राणानां प्राणाः, बुद्धेर्बुद्धिः, मनसो मनः, जगतः पितरम्, मातरम्, भ्रातरम्, सखि, ॐ, तत्, सत्, ब्रह्म सम्यगुपासितुमभिलषन्ति, तान् तदुपासनाप्रकारं भगवान् विष्णुरुपदिशति।

यथा विष्णुसंहिता ९७ अध्याये।

"उरुस्थोत्तानचरणः सव्ये करे करमितरं न्यस्य तालुस्थाचलजिह्वो दन्तैर्दन्तानसंस्पृशन् स्वं नासिकाग्रं पश्यन् दिशश्चानवलोकयन् विभीः प्रशान्तात्मा चतुर्व्विंशत्या तत्त्वैर्व्यतीतं चिन्तयेत्। १। नित्यमतीन्द्रियमगुणं शब्दस्पर्शरूपरसगन्धातीतं, सर्व्वज्ञमतिस्थूलम्। २।

सर्व्वगमतिसूक्ष्मम्। ३। सर्व्वतः पाणिपादम् सर्व्वतोऽक्षिशिरोमुखम् सर्व्वतः सर्व्वशक्तिम्। ४। एवं ध्यायेत्। ५। ध्याननिरतस्य च संवत्सरेण योगाविर्भावो भवति। ६। अथ निराकारे लक्ष्यवन्धं कर्त्तुं न शक्नोति, तदा पृथिव्यप्तेजोवाय्वाकाशमनोबुद्ध्यात्मव्यक्तपुरुषाणां पूर्व्वं पूर्व्वं ध्यात्वा तत्र लब्धलक्ष्यस्तत्तत् परित्यज्यापरमपरं ध्यायेत्। ७। एवं पुरुषध्यानमारभेत। ८। तत्राप्यसमर्थः स्वहृदयपद्मस्य अवाङ्मुखस्य मध्ये दीपवत् पुरुषं ध्यायेत्। ९। तत्राप्यसमर्थो भगवन्तं वासुदेवं (१) किरीटिनं कुण्डलिनमङ्गदिनं श्रीवत्साङ्कं वनमालाविभूषितोरस्कं सौम्यरूपं चतुर्भुजं शङ्खचक्रगदापद्मधरं चरणमध्यगतभुवम् ध्यायेत्। १०। यत् ध्यायति तदाप्नोति ध्यानगुह्यम्। ११। तस्मात् सर्व्वमेव क्षरं त्यक्त्वा अक्षरमेव ध्यायेत्। १२। न च पुरुषं विना किञ्चिदप्यक्षरमस्ति। १३। तं प्राप्य मुक्तो भवति। १४।" परब्रह्ममन्त्रस्तु—"ॐ सच्चिदेकं ब्रह्म" इति महानिर्व्वाणतन्त्रे निरूपितः। अस्य ध्यानं यथा। तत्रैव,—

"हृदयकमलमध्ये निर्व्विशेषं निरीहम्
हरिहरविधिवेद्यं योगिभिर्ध्यानगम्यम्।
जनन-मरणभीतिध्वंसि सच्चित् स्वरूपम्
सकलभुवनबीजं ब्रह्मचैतन्यमीडे॥"

ब्रह्मस्तुतिः। तत्रैव—

"नमस्ते सते सर्व्वलोकाश्रयाय
नमस्ते चिते विश्वरूपात्मकाय।
नमोऽद्वैततत्त्वाय मुक्तिप्रदाय
नमो ब्रह्मणे व्यापिने निर्गुणाय॥ १॥
त्वमेकं शरण्यं त्वमेकं वरेण्यम्
त्वमेकं जगत्कारणं विश्वरूपम्।

---

(१) वासुदेवमिति स्वस्वाभीष्टदेवतोपलक्षणम्। यथा च योगसूत्रम्। "यथाभिमत ध्यानाद्वा।" १।४ इति।

त्वमेकं जगत्कर्तृ पातृ प्रहर्तृ
त्वमेकं परं निश्चलं निर्व्विकल्पम् ॥ २ ॥
भयानां भयं भीषणं भीषणानाम्
गतिः प्राणिनां पावनं पावनानाम् ।
महोच्चैः पदानां नियन्तृ त्वमेकम्
परेषां परं रक्षणं रक्षणानाम् ॥ ३ ॥
परेश ! प्रभो ! सर्व्वरूपाविनाशिन् !
अनिर्द्देश्यसर्व्वेन्द्रियागम्य ! सत्य ! ।
अचिन्त्याक्षर ! व्यापक ! व्यक्ततत्त्वा-
जपाभासकाधीश ! पायादपायात् ॥ ४ ॥
तदेकं स्मरामस्तदेकं भजामः
तदेकं जगत् साक्षिरूपं नमामः ।
तदेकं विधानं निरालम्बमीशम्
भवाम्भोधिपोतं शरण्यं व्रजामः ॥ ५ ॥"
पञ्चरत्नमिदं स्तोत्रं ब्रह्मणः सच्चिदात्मनः ।
यः पठेत् प्रयतो भूत्वा ब्रह्मसायुज्यमाप्नुयात् ॥
प्रदोषे यः पठेन्नित्यं सोमवारे विशेषतः ।
श्रावयेद्बोधयेत् प्राज्ञो ब्रह्मनिष्ठान् सबान्धवान् ॥"
इति पञ्चरत्नस्तोत्रं समाप्तम् ॥

"त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरान्
अकाराद्यैर्व्वर्णैस्त्रिभिरभिदधत्तीर्णविकृति ।
तुरीयन्ते धाम ध्वनिभिरवरुन्धानमणुभिः
समस्तं व्यस्तं त्वां शरणद ! गृणात्योमिति पदम् ॥"
"त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवह-
स्त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च ।
परिच्छिन्नामेवं त्वयि परिणतां बिभ्रति गिरम्
न विद्मस्तत्तत्त्वं वयमिह हि यत्त्वं न भवसि ॥"
"नमो नेदिष्ठाय प्रियदव ! दविष्ठाय च नमः
नमः क्षोदिष्ठाय स्मरहर ! महिष्ठाय च नमः ।

नमो वर्षिष्ठाय त्रिनयन ! यविष्ठाय च नमः
नमः सर्व्वस्मै ते तदिदमतिसर्व्वाय च नमः ॥"
"बहुलरजसे विश्वोत्पत्तौ भवाय नमो नमः
प्रबलतमसे तत् संहारे हराय नमो नमः।
जनसुखकृते सत्त्वोद्रिक्तौ मृड़ाय नमो नमः
प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नमः ॥"

इति महिम्नस्तोत्रे।

(कवचादिकं प्राणतोषिण्यां द्रष्टव्यम्।)

---

## शरीर-वात-पित्त-कफाः।

( पूर्व्वप्रकाशितात् परम्। )

### द्वितीयः प्रबन्धः।

सर्व्वेषामेव व्याधीनां वातपित्तश्लेष्माण एव मूलमिति सिद्धान्तस्य अधिकतरस्पष्टतार्थं साधारणबोधगम्यमुदाहरणमुपन्यस्यते।

भाव्यमेतत्—यथा, कश्चिदायुर्व्वेदपाठी विकृत-वातपित्तकफानां बाह्यचिह्नं ज्ञात्वा पृथिव्यामेवं कस्मिंश्चित् प्रदेशे गच्छतु, यत्रत्या मानवाः क्वचिदपि आयुर्व्वेदस्य नामप्रसङ्गमपि न श्रुतवन्तः कुतो वा आयुर्व्वेदनिर्द्दिष्टवातपित्तकफानां विवरणम्। ते हि स्वकीयभाषया स्वीयज्ञानानुसारतश्च रोगाणां नामकरणं कारणादिनिर्द्देशञ्च कुर्व्वन्ति। परन्तु यद्यप्यसौ तत्रस्थानां स्त्री-पुं-बाल-युव-वृद्धानां नाना-जातीयानां बहुविधरोगान् दृष्ट्वा तेषु यानि कानिचित् लक्षणानि प्रकाशन्ते, तानि वातपित्तकफलक्षणादृते न किञ्चिद्भवन्ति, तथा वातपित्तकफचिकित्सया एव तेषां शान्तिर्जाता इति पश्यति, तदा कथमसौ स्फुटज्ञानो मानवः आयुर्व्वेदीयमहासूत्रे परमाप्तकथिते न विश्वसेदिति।

८। अत्र तु अयं मानसः प्रश्नः अग्रेसरति। तथाहि, यदि वातपित्तकफा एव सर्व्वरोगमूलम् इत्येव सिद्धान्तः, तदा देशान्तरीया ये चिकित्सका आयुर्व्वेदज्ञानाभावात् वातपित्तकफविवरणं न जानन्ति, कथं तेऽपि विविधरोगनिर्णयं स्वकपोलकल्पित-चिकित्सया च, आरोग्यसाधनं कुर्व्वन्तीति।

तत्रोच्यते, यद् बुद्धिमता विवेच्यम्। जगत्यस्मिन् यत्पदार्थस्य यल्लक्षणम्, यद् द्रव्यस्य च या शक्तिः, यत्शक्तेश्च यत् कार्य्यं स्वाभाविकमस्ति, केचिल्लोकास्तत् सर्व्वं जानन्तु न जानन्तु वा, स्वीकुर्व्वन्तु न वा स्वीकुर्व्वन्तु, परन्तु तत् तथा एव, नान्यथा। तत्त्वमेतत् स्वीकार्य्यमेव। तथाहि,

वह्नेः शक्तिर्दाहकरणयोग्यत्वम्। तृणस्य शक्तिर्दाह्यतागुणात् दग्धीभवनयोग्यता। तयोः संयोगकार्य्यं दाहक्रिया, इति स्वाभाविकम्। तत्र लोकास्तत्त्वमेतद् जानन्तु; नवा जानन्तु, स्वीकुर्व्वन्तु नैव वा स्वीकुर्व्वन्तु; कृते तु तृणेन वह्नेः संयोगे दाहक्रिया भवेदित्यत्र नान्यथा सम्भवति।

अपि च, अज्ञानत्वाद् भ्रान्तिज्ञानत्वाद् वा, यदि लोका इत्यसाकलयन्ति, यदग्नौ एव दाह्यतागुणः, तृणे हि दाहकरणयोग्यता, तथा अग्नितृणयोः संयोग-भूमेरेव कार्य्यं दाहक्रिया इति। तथापि तादृशैः कृते अग्नितृणसंयोगे दाहक्रिया भवत्येव।

अपरन्तु, यद्यपि केचित् आयुर्व्वेदशास्त्रे विद्वेषबुद्ध्या जिगीषावशाद् वा ज्ञानपूर्व्वकमेवं कथयन्ति, यद् वह्नौ दाहकरणयोग्यता नास्ति; तृणेऽपि न हि दाह्यतागुणः; तयोः संयोगोऽपि न दाहकारणम्। अपि च दाहक्रियापि न दाहशब्दवाच्या। परन्तु तादृशैः कृतेऽपि अग्नितृणसंयोगे दाहक्रिया भवत्येव इत्यत्र न सन्देहः।

एतावता अयमेव फलितार्थः। यथा, सर्व्वथा प्रमाणसिद्धाः वेदवाक्यनिर्द्दिष्टाः शरीरवातपित्तकफा एव सर्व्वरोगकारणमिति स्वाभा-

विकम्। आयुर्व्वेदानभिज्ञास्तु तत्त्वमेतत् न ज्ञात्वा कुशिक्षावशात् विविधकारणैर्जिगीषावशाद् वा अपराणि शारीररक्तमांसादीनि यन्त्रविशेषान् वा सर्व्वरोगकारणत्वेन कथयन्तु; अथवा निजसिद्धान्ते पक्षपातवशात् आयुर्व्वेदनिर्द्दिष्टान् वातपित्तकफान् शिरास्नायु-धमन्यादीनां क्रियाविशेषरूपेण धर्म्मविशेषरूपेण वा वर्णयन्तु; वस्तुतस्तु सर्व्वेष्वेव रोगेषु वातपित्तकफानां लक्षणानि नियतत्वेन परिदृश्यन्ते, इत्यहरहः प्रत्यक्षम्। अत एवं सिद्धान्तः, यथा, विजातीया चिकित्सका हि तत्तद् रोगेषु स्वयम् अज्ञातसारं वस्तुगत्या वातपित्तकफनाशकद्रव्याणि प्रयोजयन्ति, तस्मादेव आरोग्यं भवतीति प्रकृततत्त्वम्।

८। वस्तुतस्तु लोकानां ज्ञानस्य पूर्णत्वापूर्णत्वाभ्यां तत्त्वनिर्णय-सिद्धान्तस्यापि अभ्रान्तताभ्रान्तते सम्भवतः। न हि कश्चिल्लोकः संस्कारविपरीतं किञ्चित् करोति। संस्कारश्च ज्ञानाज्ञानमूलक एव। आधुनिकाः खलु वैदेशिकचिकित्सकाः पूर्णज्ञानसमुद्रे ह्यायु-र्व्वेदशास्त्रे उल्लिखितानां वातपित्तकफानां प्रकृतस्वरूपं नावबुध्य सपरिहासं कथयन्ति, "वैद्या हि शारीरतत्त्वे अनभिज्ञत्वादेव रोग-निर्णये वातपित्तकफा इति त्रीन् पदार्थान् सर्व्वदा उल्लिखन्ति। परन्तु शरीरस्थेषु शिरास्नायुप्रभृतिषु वायुर्नास्त्येव। अलमधिकेन, यदि कदाचित् शिरास्थितशोणिते वायुसंयोगो भवेत्, तदा तत्-क्षणात् मृत्युर्भवेदिति वातपित्तकफानामुल्लेखोऽत्र अज्ञानता एवेति।"

अत्रोच्यते यद् बुद्धिमद्भिश्चिन्तनीयम्। न ह्यायुर्व्वेदोक्ता वात-पित्तकफाः सामान्यमानवैर्मनःकल्पिताः। अपि तु आवहमानकालम् ईश्वरवाक्यस्वरूपे वेदशास्त्रे लिखिताः सन्ति। अपि च उपहास-कारिभ्यो बहुसहस्रगुणैः ज्ञानवन्तस्त्रिकालज्ञाः परमयोगिनो महर्षयः आसत्ययुगात् असङ्ख्यप्रायाणां मानवानां रोगनिर्णयम् आरोग्य-

साधनञ्च, स्वस्थतावर्द्धनात् दीर्घजीवित्वञ्च सम्पादितवन्तः। अतएव न हि वातपित्तकफा बुद्धिमतामात्मवताञ्च उपहासविषयाः सम्भवन्ति। अपि च जीवदेहस्थः प्राणादिराध्यात्मिकवायुर्नहि सर्व्वथा बाह्यवायोः समानगुण एव। अतो बाह्यवायुसंयोगात् रक्तविकृतिं प्रदर्श्य आभ्यन्तरवायोरस्तित्वे संशयावलम्बनम् अज्ञानताविजृम्भितमेव, उपमासम्भवात्। असंशयत्वञ्चात्र प्रत्यक्षानुमाणशाब्दप्रमाणैर्द्दर्शितपूर्व्वम्।

१०। पृथिव्यामाधुनिका आध्यात्मिकतत्त्वे अल्पशिक्षिताश्च यूरोपजाताः चिकित्सकाः शारीरवातपित्तकफेषु यथा वितण्डां संशयञ्च प्रकाश्य यद्भावापन्नं सिद्धान्तमवलम्बन्ते, हन्त! बहुपूर्व्वस्मिन् भारतजाता अपि तादृशा लोकास्तथैव कृतवन्तः। अगाधसमुद्ररूपे आर्य्यशास्त्रे ते वितण्डासंशयसिद्धान्तास्तत्खण्डनञ्च लिखितानि सन्ति। तथाहि—

"सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च।"

(इति सांख्यकारिका। २९।)

अस्य तात्पर्य्यार्थः। प्राणादिसंज्ञका पञ्च अध्यात्मवायवः ज्ञानकर्म्मोभयेन्द्रियाणां साधारणवृत्तिः। अर्थात् प्रत्येकं करणस्य (इन्द्रियस्य) स्वस्वव्यापारात् प्राणादिक्रियाभेदो जायते। यथा पिञ्जरस्थानां बहुसङ्ख्यकानां पक्षिणाम् स्वस्वव्यापारात् पिञ्जर-सञ्चालनं भवेत्, तथा देहस्थितानां नेत्रादिज्ञानेन्द्रियाणां हस्तादिकर्म्मेन्द्रियाणाञ्च मनसश्च क्रियासमूहात् प्राणायतनं वायुकोषाख्यं श्वासयन्त्रम् प्रस्पन्दते। ततस्तस्य सङ्कोचविस्तारात्मकः क्रियाविशेषः सञ्जायते। तस्मात् अपानाद्यायतनेऽपि क्रियान्तरमुत्पद्यते। इत्थं सर्व्वशरीरेषु रक्तादिगतिर्भुक्तद्रव्यपरिपाकादि च भवतीति।

अस्य खण्डनम्।

सिद्धान्तोऽयमसम्यक् आगमविरुद्धत्वात्, युक्तिविरोधाच्च। तथाहि,

क। "स वायुना भाति च, तपति च।" [ इति श्रुतिः। ]

अस्य व्याख्यानम्। "स प्राणः न वायुः। किन्तु स वायुना आधिदैविकेन भाति अभिव्यज्यते। अभिव्यक्तः सन् भाति कार्य्यक्षमो भवति।"

अस्य तात्पर्य्यार्थः। प्राणादिराध्यात्मिको वायुः न हि सर्व्वथा आधिदैविकेन वाह्यवायुना समानगुणसम्पन्नः। अपि तु स समानासमानगुणसम्पन्न इति फलितार्थः। तस्मात् एकांशतः वाह्यवायुना समानगुणसम्पन्नत्वात् तेन वाह्यवायुना संयुक्तः सन् अभिव्यज्यते अभिव्यक्ततां याति। तत एव कार्य्यक्षमः आयुर्व्वेदनिर्द्दिष्टस्पन्दनपूरणादिकार्य्यसाधनसमर्थो भवतीति।

ख। "किन्तु, न वायुक्रिये पृथगुपदेशात्।"

( शारीरकसूत्रे, द्वितीयाध्याये चतुर्थ पादे नवमसूत्रम्। )

अस्य तात्पर्य्यार्थः। देहस्थः प्राणादिवायुः न वायुः अर्थात् न हि सर्व्वथा वाह्यवायोः समानगुणसम्पन्नः। अपि च न वा क्रिया, अर्थात् फुफ्फुसयन्त्रस्य, तदङ्गीभूतपेशीनिचयानां वा सङ्कोच-विस्तारात्मको यान्त्रिकक्रियाविशेषः। यतः शास्त्रेषु प्राणादिवायुः वाह्यवायुश्च यान्त्रिकक्रिया च, पृथक् निर्द्दिष्टाः सन्ति। तेन प्राणादिवायोर्व्वाह्यवायुत्वे यान्त्रिकक्रियात्वे वा स्वीकार्य्ये, वाह्यवायुयान्त्रिकक्रिययोर्व्वैयर्थ्यापत्तिः स्यात्। एतावता आगमविरुद्धत्वं दर्शितम्।

ग। पुनश्च सिद्धान्तोऽसौ युक्तिविरुद्ध एव। तथाहि, यदि प्राणादिवायुः क्रियापदार्थः स्यात्, तदा तस्य रूक्षतादिगुणाधारत्वं न संगच्छेत। गुणक्रियावत्त्वं द्रव्यत्वमिति द्रव्यलक्षणात्। प्राणादेर्गुणाधारत्वन्तु आयुर्व्वेदे निर्द्दिष्टम्। तथाहि,

"रूक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विशदः खरः।
विपरीतगुणैर्द्रव्यैर्मारुतः संप्रशाम्यति॥"

( चरकसंहितायां सूत्रस्थाने, प्रथमाध्याये। )

११। वस्तुतस्तु शारीरिकवातपित्तकफानां विकृतया रोगोत्पत्तौ

प्रकृत्या च स्वस्थतायां, तेषामेव च विकृतिविनाशकापचिकित्सया आरोग्यसाधने समुद्रवद्विस्तृतमायुर्व्वेदशास्त्रं प्रवलतमं प्रमाणम् अहरहः प्रत्यचञ्च। तथाहि—

"विसर्गादानविक्षेपैः सोमसूर्य्यानिला यथा।
धारयन्ति जगत् देहं कफपित्तानिलास्तथा॥
नर्त्ते देहः कफादस्ति न पित्तान्न च मारुतात्।
शोणितादपि वा नित्यं देह एतैस्तु धार्य्यते॥"

(सौश्रुतसूत्रस्थाने २१ अध्याये।)

"अध्यात्मलोकी वाताद्यैर्लोकी वातरवीन्दुभिः।
पीड्यते धार्य्यते चैव विकृताविकृतैः स च॥"

(चरकीयचिकित्सितस्थाने २४ अध्याये।)

किञ्च, "दोषाः चीणा वृंहयितव्याः।
कुपिताः प्रशमयितव्याः।
वृद्धा निर्हर्त्तव्याः।
समाः परिपाल्या इति सिद्धान्तः॥"

(सौश्रुतचिकित्सितस्थाने ३३ अध्याये।)

१२। इदानीमुपसंहारस्तु संचेपेण, शारीरवातपित्तकफानाम् अस्तित्वे सर्व्वरोगकारणत्वे च ईदृशि जाज्वल्यमाने प्रमाणेऽपि विज्ञानमये आयुर्व्वेदशास्त्रे शिक्षितानां वैद्यानां "शारीरतत्त्वे अनभिज्ञत्वाद् वैद्याः रोगकारणत्वेन सर्व्वदा वातपित्तकफान् उल्लिखन्ति" इत्यमपवादप्रयोगस्य पण्डिते मूर्खतायाः साधुजने दुरात्मतायाः, आलोके अन्धतमसस्य, सत्ये असत्यस्य आरोपवत् अश्रद्धेयः उपहसनीयश्च भवतीति अलमतिविस्तरेण।

कविराजः
श्रीईशानचन्द्र "विशारद" वन्द्योपाध्यायः।
[कलिकाता, निमतलाष्ट्रीट, ६७ नं।]

---

# पूर्व्वकालीनाः कथं दीर्घायुषः ?

( पूर्व्वप्रकाशितात् परम्। )

दर्शितानि स्मृतिप्रमाणानि। स्मृतिकृतस्तु मन्वादयः अवश्य-कर्त्तव्येऽपि विषये कुत्रचित् वा पापभयं क्वचिद्वा रोगभयं क्वचन वा मृत्युभयं यदि वा दर्शयेयुः, किन्तु शारीरविज्ञानविदस्तु चरकादय आयुर्व्वेदकृतः निषिद्धपुरीषादीनामपि गुणान् विचार्य्य वस्तुशक्तिं प्रतिपन्नाः स्वस्वसदाचार एव आरोग्यमूलम् दीर्घायुष्करञ्च इति भूयोभूयः प्राब्रुवन्। अत्र युक्तीरपि वक्ष्यामः। स्मृतौ पूर्व्वमुक्तं "व्याधितोऽल्पायुरेव च" इति। आयुर्व्वेदे च व्याधिकारणान्येतानि त्रीणि निरूपितानि। यथा ये खलु शब्दस्पर्शरूपरसगन्धाः शनैः शनैः इन्द्रियैर्ग्रहीतुं नाभ्यस्ताः, तेषामतिशयेन योगः अयोगः मिथ्या-योगो वा(१) व्याधिकारणं, तच्च असात्म्येन्द्रियार्थसंयोगः कथ्यते (१)।

यो यद्वस्तु यत्परिमितं ग्रहीतुं शक्नोति, तस्य तदेव सम्यक्, विपरीते तु न्यूने अधिके वा ग्रहीता क्लान्तो भवेत्। यथा कश्चित् प्रस्थपरिमितमन्नं भोक्तुं शक्यते, स यदि बलात् द्विप्रस्थं भोज्यते, प्रस्थन्यूनं वा न किञ्चिदपि वा भोज्यते, तदा स तेन प्रतिहन्यते। तथा श्रोत्रादिषु इन्द्रियेषु यावती शब्दादिविषयं ग्रहीतुं शक्तिर्व्वर्त्तते, तावदेव तानीन्द्रियाणि सम्यक् गृह्णन्ति, यद्यतिरिक्तं गृह्णन्ति, नैव वा किञ्चिदपि गृह्णन्ति, तदा तेषां शक्तिर्लीयते। यद्वा, श्रोत्रादिषु इन्द्रियेषु यावन्तः शब्दस्पर्शरूपरसाः सन्ति, तेभ्यः समधिकाः शब्द-स्पर्शरूपरसा यदि तत्र प्रविशन्ति, तदा तत्रत्यानीन्द्रियाणि पला-यन्ते, यथा सिंहं प्रविशन्तमालोक्य मृगाः।

यथा कर्कशपटहशब्दाः सततं श्रोतुं नाभ्यस्ताः कर्णेन्द्रियेण, यदि कर्णसन्निधौ सप्ताहं निरन्तरं दृढकठिन्या पटहस्ताड्यते, कश्चिद्वा खरचित्कारं करोति, वास्ययानस्य शुषिरं वा कर्णोपरि

( १ ) अयोगातियोगसमयोगन्यूनयोगातिरिक्तयोग एव मिथ्यायोगः कथ्यते।

ध्वनयति, तदा वाधिर्य्यमुत्पद्यते। अस्य वाधिर्य्यस्य रोगस्य कारणं अतियुक्तः पटहादिशब्द एव। एवं तुलादिना यदि सप्ताहं कर्णौ पिहितौ शब्दं न गृह्णीतः तदापि वाधिर्य्यं व्याधिरुपत्स्यते। अत्रापि वाधिर्य्यरोगोत्पत्तौ अयुक्तः शब्द एव कारणम्। एवं यस्य पुनः शब्दस्य श्रवणेन न किमपि प्रयोजनम् परन्तु स श्रूयते स मिथ्यायोगः—यथा कश्चिद्‌गीतिरसिकः रङ्गे अन्यैरनुरुद्धः लज्जया वा परिवाधितः अमत्या अश्रद्धया अन्यमनस्कत्वेन वा रात्रौ गीतं शृणोति न शृणोति च आसीनप्रचलायितश्च (१) भवति, तस्यापि श्रोत्रादिरोगो जायते। एवं उष्णादिस्पर्शानामतितीव्राणामनभ्यस्तानां ग्रीष्मार्द्धदिवसमार्त्तण्डरश्मीनामतिशयेन सहनं, एकान्ततोऽसहनं मिथ्यासहनञ्च त्वगिन्द्रियवैकल्यजनितकुष्ठादिरोगनिदानम्। कार्य्यानुरोधेन सहनन्तु न तथा रोगजनकं कार्य्यापहृतचित्तस्य, किन्तु निष्प्रयोजनमुष्णादिसहनन्तु प्रत्यक्षत एव रोगान् जनयति।

एवं नेत्रप्रतिघातकस्य सवितृरूपस्यातिशयेन प्रेक्षणम्, चक्षुषी मुद्रयित्वा कस्यापि रूपस्याप्रेक्षणम्, मिथ्याप्रेक्षणञ्च चक्षूरोगकारणम्। यथा—अर्द्धदग्धं शवम्, छिन्नघ्राणौष्ठविकटदृष्टदंष्ट्रं वा पुरुषं निष्प्रयोजनं दृष्ट्वा द्रष्टुर्व्विविधरोगः सम्भवति।

एवं लवणादिरसस्यातिशयेन स्वादनमेकान्ततोऽनास्वादनं मिथ्यास्वादनञ्च जड़तातिरोगनिदानम्। यथा च ब्राह्मणस्य पलाण्डुप्रभृतिनिषिद्धरस आचतुर्द्दशपुरुषात् स्वादितुमनभ्यस्तो यदि ब्राह्मणेन केनापि मन्दभाग्येन जिह्वालौल्यात् स्वाद्यते, तस्य विशुद्धजन्मनोऽनतिदिनेनैव विविधरोगा जायन्ते, यथा च, कीटदष्टं पूतिगन्धं विकृतरसमिक्षुदण्डं निरर्थकं चर्व्वतो विविधरोगः सम्भवेत्।

एवं सदसद्‌गन्धस्याप्यतिशयेन ग्रहणमेकान्ततोऽग्रहणं मिथ्याग्रहणञ्च अजिघ्रतारोगमूलम्। इति शब्दादीनामसात्म्येन्द्रियार्थसंयोगः।

(१) "झिमुन" इति यस्य प्रसिद्धिः।

मिथ्याज्ञानमपि रोगनिदानम् ॥ २ ॥ यथा—

बुद्धिदोषात् ये अधर्ममाचरन्ति तेऽपि रोगैः पीड्यन्ते। एतदेव प्रज्ञापराधः कथ्यते।

एवं परिणामोऽपि रोगमूलम् ॥३॥ यथा—यस्तु स्वयं परिणमति अन्यमपि स्वसंयोगेण परिणमयति सपरिणामः कालः। तस्य स्वाभाविकानां शीतादीनामतिशयेन योगः अयोगः मिथ्यायोगरूपः असात्म्येन्द्रियार्थसंयोगोऽपि परिणामघटितत्वात् परिणामः कथ्यते रोगकारणम्।

तथा च माधवकरकृतनिदाने वाग्भटः। निदानस्थाने।१म अध्याये।४।

"निमित्तहेत्वायतनप्रत्ययोत्थानकारणैः।
निदानमाहुः पर्य्यायैः प्राग्रूपं येन लक्ष्यते ॥५॥"

इत्यत्र विजयरक्षितस्तु। "त्रिविधो वा असात्म्येन्द्रियार्थसंयोगप्रज्ञापराधपरिणामभेदात्। तत्रासात्म्येन्द्रियार्थसंयोगः अयोगातियोगमिथ्यायोगयुक्ता रूपरसादयः। प्रज्ञापराधो मिथ्याज्ञानादिः। परिणामोऽयोगादियुक्ता ऋतुस्वभावजाः शीतादयः। अधर्मस्य च रोगहेतोरत्रैवान्तर्भावः। इति भट्टारहरिचन्द्रः। तस्यापि कालान्तरपरिणतस्य दुःखकर्त्तृत्वात्। चक्रस्तु प्रज्ञापराधे तस्याधर्मस्यान्तर्भावमाह। मिथ्याज्ञानकृतब्रह्मवधस्य प्रज्ञापराध एव मूलम् ॥"

यथा च महर्षिचरकः। निदानस्थाने। १।

"तत्त्रिविधमसात्म्येन्द्रियार्थसंयोगः प्रज्ञापराधः परिणामश्चेत्यतस्त्रिविधविकल्पा व्याधयः ॥" (१)

प्रज्ञापराधमाह महर्षिचरकः। शारीरस्थाने, कतिधापुरुषीये प्रथमाध्याये। यथा—

(१) असात्म्येन्द्रियार्थसंयोगास्त्वयोगादयः प्रज्ञापराधे परिणामे च वर्त्तन्ते। ताभ्यामतिरिक्तस्थले एव असात्म्येन्द्रियार्थसंयोगस्योदाहरणम्। यथा—बलात् कश्चित् प्रखररौद्रे बध्नाति, तस्य तदसात्म्येन्द्रियार्थसंयोगो न प्रज्ञापराधेन, न वा परिणामेण। प्रज्ञापराधजनितः परिणामकृतश्च असात्म्येन्द्रियार्थसंयोगस्तन्मूलत्वात् प्रज्ञापराधः परिणामश्च कथ्यते।

"धीधृतिस्मृतिविभ्रष्ट: कर्म्म यत् कुरुतेऽशुभम्।
प्रज्ञापराधं तं विद्यात् सर्व्वदोषप्रकोपनम्॥
उदीरणं गतिमतामुदीर्णानाञ्च निग्रह:।
सेवनं साहसानाञ्च नारीनाञ्चातिसेवनम्॥
कर्म्मकालातिपातश्च मिथ्यारम्भश्च कर्म्मणाम्।
विनयाचारलोपश्च पूज्यानाञ्चाभिधर्षणम्॥

ज्ञातानां स्वयमर्थानामहितानां निषेवनम्।
परमौन्मादिकानाञ्च प्रत्ययानां निषेवनम्॥
अकालादेशसञ्चारी मैत्री संक्लिष्टकर्म्मभि:।
इन्द्रियोपक्रमोक्तस्य सद्वृत्तस्य च वर्ज्जनम्॥ (१)

ईर्ष्यामानमदक्रोधलोभमोहमदभ्रमा:।
तज्जं वा कर्म्म यत् क्लिष्टं क्लिष्टं यद्देहकर्म्म च॥
यच्चान्यदीदृशं कर्म्म रजोमोहसमुत्थितम्।
प्रज्ञापराधं तं शिष्टा ब्रुवते व्याधिकारणम्॥
बुद्ध्या विषमविज्ञानं विषमञ्च प्रवर्त्तनम्।
प्रज्ञापराधं जानीयात् मनसा गोचरं हि तत्॥

**तथा चाष्टाङ्गहृदये वाग्भट:। सूत्रस्थाने। ४ अध्याये ३७।**

"नित्यं हिताहारविहारसेवी समीक्ष्यकारी विषयेष्वसक्त:।
दाता सम: सत्यपर: क्षमावानाप्तोपसेवी च भवत्यरोग:॥"

(१) चरकसंहितायां सूत्रस्थाने "इन्द्रियोपक्रमणीयनामके अष्टमाध्याये उक्तस्य सद्वृत्तस्य सदाचारस्य वर्जनं प्रज्ञापराध:। स च रोगकारणमित्यर्थ:। इन्द्रियोपक्रमणीये अध्याये तूक्तं।" "तस्मादात्महितं चिकीर्षता सर्व्वेण सर्व्वं सर्व्वदा स्मृतिमास्थाय सद्वृत्तमनुष्ठेयम् तद्ध्यनुष्ठानं युगपत् सम्पादयत्यर्थद्वयम् आरोग्यमिन्द्रियविजयञ्चेति।" इत्यभिधाय समाप्तौ पुनरुक्तम्।

"स्वसद्वृत्तं यथोद्दिष्टं य: सम्यगनुतिष्ठति।
स समा: शतमव्याधिरायुषा न वियुज्यते॥" इति।

इन्द्रियोपक्रमणीयाध्यायस्तु अतीव सुन्दरतया अस्यैव प्रबन्धस्याङ्गीभूततया च इंरेजि-भाषयानूद्य आश्विनमासीय पत्रिकाया: पश्चात् विन्यस्यते॥

# नालिकास्त्रम्। (१)

इह खलु भारतवर्षे यदार्य्याणामेकाधिपत्यमासीत् तदा तेषां सर्व्वत्र सर्व्वविषयेषु सर्व्वप्रकारेण समुन्नतिर्जातेत्यत्र बहूनामैकमत्यमस्ति। सात्त्विकेषु आध्यात्मिकेषु योगादिषु, राजसेषु वैषयिकेषु शिल्पयुद्धादिषु च विषयेषु तेषां सम्यक् पारदर्शिता आसीदत्र तु तत्कृतानि शास्त्राण्येव प्रमाणं भवन्ति। आर्य्यशास्त्रदर्शनविमुखाः आधुनिकाः केचित् पण्डितम्मानिनः कथयन्ति,—"पुरा खलु आर्य्यमिश्रा न तथा विज्ञानविदो नीतिशास्त्रतत्त्वज्ञाश्चासन्, यथेदानीं ससागरपृथिवीपालका इंरेजराजचक्रवर्त्तिनो भवन्तीति।" आस्तां तावत् तद्वाक्यविचारणा। नास्त्यस्माकं तत्र कोऽप्यभिलाषः। आर्य्या यादृशा आसन् तादृशाः सन्तु। न खलु महात्मानः केषाञ्चित् वाक्येनैव वृद्धिमाप्नुवन्ति ह्रासमुपयान्ति वा। परन्तु, अस्माकमेषैव दुःखपरम्परा यदकृतज्ञा आर्य्यसन्ताना अनवलोक्यैव पूर्व्वपुरुषनिधिं दरिद्रास्ते इति मन्यन्ते। यद् भवतु भूयतां, वयन्तु तद्गुणैर्व्विवशीकृता अनिच्छन्तोऽपि तेषां कानिचित् कार्य्याणि स्मारयितुं बलादिव प्रेरिताः स्मः।

बहूनामेवार्य्यकुलधुरन्धराणां एतादृशः संस्कारो वर्त्तते, यदधुनातन इंरेजनृपानां वन्दुककामानाख्यमिवास्मत्पूर्व्वपुरुषाणां आशु जयप्रदं किमपि विस्मयावहं अस्त्रं नासीत्। आर्य्ययोद्धारस्तु युद्धसमये पार्व्वत्यवर्व्वरा इव (साँओताल) प्रायशो धनुर्व्वाणैरेवायुध्यन्त। इंराजराजानामस्त्रन्तु नवाविष्कृतं अभूतपूर्व्वं समुन्नतनरसमाज बुद्धिप्राखर्य्यतापरिचायकञ्च। एतादृशमस्त्रं कस्मिन्नपि काले नासीदित्येव तेषां स्थिरसिद्धान्त इति।

अधुनोच्यते सर्व्वसमुन्नतिशीलानामार्य्याणां समये यन्नासीत् तन्न भवति भविष्यति वा। अधुनातनमाश्चर्य्यप्रदं वन्दुककामानाख्यमस्त्रं

(१) "वन्दुक" "कामान" इति यस्य प्रसिद्धिः (Gun)

पुरा क्षुद्र नालिक-बृहन्नालिकनामधेयमासीत्। अस्त्रमिदं कूटयुद्ध-व्यवहार्य्यत्वादनुचितमपि आर्य्यैर्यथाकथञ्चित् समादृतञ्चासीत्। अथ कालवशात् धनुर्व्वेदे नष्टप्राये अस्यापि व्यवहारः प्रायशस्तिरोभूत-वान्। अधुना पुनराविष्कृतं ऋतुपरिवर्त्तने तदुद्भवफलमिव नूतन-मितिप्रतीयते। यथा वसन्तग्रीष्मौ चूतप्रसवत्वेन विदितौ, न तथा शरदादयः। कालगत्या यदैव वसन्तग्रीष्मौ समागच्छतस्तदैव चूतमु-कुलफलादिकमवलोक्य सर्व्वेऽपि कथयन्ति "नूतनोऽयं चूतः। देहि देवब्राह्मणेभ्यः परितोषय कुटुम्बिनश्चेति।" कतिपयमासानदृष्टे-ऽपि चूते यदि पुनस्तद्दर्शनात् तस्य नूतनत्वं सम्भवति तदा बहुका-लात् परं पुनर्दृष्टे नालिकास्त्रे कथं तत्र नूतनत्वं न स्यात्। अतः कथ्यते यन्नासीत् तन्न भवति भविष्यति वा। परन्तु आर्त्तवफलवत् सर्व्वेषां नूतनत्वं सम्भवति। नवाविष्कृतं नालिकास्त्रं कालवशेन पुनर्व्विलयं न गमिष्यतीति को निश्चेतुं समर्थः। कैर्व्विदितं पुरा जनसमागमशून्यमरण्यवत् स्थानमिदं एतादृशी समृद्धिशालिनी कलिकाताभिधेया राजधानी भविष्यति? कैर्व्वा समालोचितं बहु नगरपरिपूर्णं समृद्धिमत् नगरं भीषणारण्यत्वेन परिणंस्यतीति? फलतो निरन्तरपरिवर्त्तनशील-कालसमुद्भूतवस्तुजातेन विचारे कर्त्तव्ये सर्व्वेषां परिवर्त्तनशीलतैव स्फुटीभविष्यतीत्यतोऽस्मिन् नवाविष्कृत-नालिकास्त्रे न कश्चित् विस्मयावसर इति।

नालिकास्त्रस्य विवरणन्तु दानवगुरुशुक्राचार्य्यकृत-नीतिशास्त्रे, वैशम्पायनकृतनीतिप्रकाशिकायां, शार्ङ्गधर-संगृहीतधनुर्व्वेदे, वीर-चिन्तामणिप्रभृतिषु ग्रन्थेषु च सुस्पष्टमस्ति। महाभारते रामायणे-ऽपि च अस्य व्यवहारो दृश्यते। अधुना पाठकानां परितोषार्थं तस्य आकृतिं क्रियादिकञ्च शास्त्रप्रमाणेन दर्शयित्वाधुनिकास्त्रेण सहास्य सौसादृश्यं स्फुटीकर्त्तुं प्रयतामहे। (क्रमशः।)

श्रीनन्दलाल विद्याविनोदः।

# तत्त्वप्रपञ्चः ।

( पूर्व्वप्रकाशितात् परम् । )

प्रियविरहजं दुःखं वीणारवश्रवणसुखं वा, ज्वरदुःखं सितसर्करा-स्वादसुखं वा, इक्षुदण्डचर्व्वणे शब्दस्पर्शरूपरसगन्धज्ञानं वा सर्व्वमेव सुखदुःखं क्षणिकमिति सिद्धान्ते सर्व्वशास्त्राणामैकमत्यमेव। तथा-विधस्य क्षणिकदुःखस्य स्वत एव नश्वरस्य निवृत्तये किमिति प्रकृति-पुरुषविवेकरूपः पुरुषार्थः गुरुतरव्यापाराडम्बरः ।

किन्तु तथापि अनागतावस्थसूक्ष्मदुःखनिवृत्तेरेव पुरुषार्थतया प्रस्ताविते पर्य्यवस्यति। तथाहि प्रत्यक्षितं स्थूलं दुःखं वर्त्तमान-काले अनुभूयमानं द्वितीयक्षणात् परतः स्वयमेव नङ्क्ष्यति, अतो न तत्र पुरुषकारापेक्षा। अतीतन्तु दुःखं प्रागेव प्रनष्टमित्यत-स्तद्दुःखनिवृत्तयेऽपि निष्प्रयोजनः पुरुषकारः। अवशिष्टन्तु सूक्ष्मा-वस्थया बुद्धौ स्थितं विषयसम्बन्धात् प्रकाश्यमानं भविष्यद्दुःखं निर्म्मूलयितुं पुरुषकारस्यावश्यकत्वम् ।

( क्रमशः । )

---

# प्रवेशिकाप्रश्नास्तदुत्तरादर्शाश्च ।

## ENTRANCE EXAMINATION, 1893.

SANSKRIT.

*The figures in the margin indicate full marks.*

( पूर्व्वप्रकाशितात् परम् । )

2. (*a*) दातव्यो यदि वावश्यं प्रियायै ते वरः प्रभो ।
किमर्थं ते प्रतिज्ञातं रामस्याप्यभिषेचनम् ॥

(*b*) नहि रामं परित्यज्य चिरं शक्ष्यसि जीवितुम् ।
सत्कर्म्मोपार्ज्जिताल्लोकात् कैकेय्यर्थे परिच्युतः ॥

(*c*) कौसल्ये लब्धलक्ष्येण तरुणेन मया पुरा ।
कौमारे शब्दवेधित्वश्लाघिना दुष्कृतं कृतम् ॥

(1) In *(a)*, give a synonym for प्रतिज्ञातम् In what *vibhakti* is ते in (*a*), and why ? 2

(2) Give the *anvaya* or syntactical concord of the extract *(b)*.

(*3*) In (*c*), give a synonymous expression for दुष्कृतं कृतम्, What is the meaning of लक्ष्य in लब्धलक्ष्येण ? 2

*Answer.*

(1) प्रतिज्ञातमङ्गीकृतम् ।
प्रथमार्द्धे ते इत्यत्र कर्त्तरि षष्ठी, दातव्य इति कृत्यप्रत्यय योगे षष्ठ्या विकल्पेन विधानात् । द्वितीयार्द्धे ते इत्यत्र तु सम्बन्धविवक्षया षष्ठी विभक्तिः । निष्ठाप्रत्यययोगे षष्ठी निषेधात् ।

(2) (हे दशरथ ! त्वं) रामं परित्यज्य चिरं जीवितुं न हि शक्ष्यसि । (त्वं) कैकेय्यर्थे सत्कर्म्मोपार्ज्जितात् लोकात् परिच्युतः (असि) ।

(3) दुष्कृतं असाधुकर्म्म कृतम् अनुष्ठितम् । लक्ष्यं वेध्यं वस्तु ।

3. जलार्द्रगात्रं विलपन्तमेवं शराभिघातार्त्तमतिश्वसन्तम् ।
शिशुं सरय्वां तमहं शयानं दृष्ट्वैव चासं सुभृशं विषण्णः ॥

Turn the above into prose, using as many words of your own as you can. 6

*Answer.*

अहं सलिलसिक्तशरीरं उक्तप्रकारेण शोचन्तं बाणप्रहार-क्लिष्टं [अतएव] दीर्घं निश्वसन्तं तं शिशुं सरयूजले पतितं दृष्ट्वैव नितरां दुःखितः अभवम् ।

(5) यदस्माभिरजानद्भिः किञ्चिदुक्तो नराधिपः।
क्षन्तुमर्हति तत् सर्व्वं धर्म्मात्मा ह्येष पाण्डवः॥

(1) Explain the above *sloka* in Sanskrit.

(2) Name the roots of समुद्धृते, ध्यात्वा, and क्षन्तुम्, and give their conditional future (लृङ्), third person plural. 8

(3) Explain the force of ह्हि in the second line. Parse किञ्चित् and नराधिपः।

*Answer.*

5 (1) युधिष्ठिरादि पाण्डवानां स्वरूपावगतेरनन्तरं सानुजं धर्म्मराजं प्रीणयन्नाह विराटः—अजानद्भिरविद्वद्भिः अस्माभिः नराणां मनुष्याणां अधिपो राजा युधिष्ठिरः यत् किञ्चित् अप्रियं उक्तः अभिहितः, एषः, धर्म्म आत्मा यस्य सः धार्म्मिकः पाण्डोरपत्यं पुमान् पाण्डवः युधिष्ठिरः तत् सर्व्वं बहुविधकटुवचनप्रयोगरूपं अपराधं क्षन्तुं सोढुं अर्हति योग्यो भवति हि निश्चये। अज्ञानकृतत्वात् तत् सर्व्वो दोष उपेक्षितव्य इत्यभिप्रायः। दुहादेरप्रधान इति सूत्रेण दुह्याचीत्यादिना ब्रूधातोर्दुहादिगणान्तर्गतत्वादत्र अप्रधाने कर्म्मणि नराधिपे प्रथमा। पूर्व्वोक्तधातूनां लृङः प्रथमपुरुषबहुवचने यथाक्रमं एवं रूपाणि भवन्ति।

(2) समुद्धृते इति धृह्व धातोः { अधरिष्यन्, अहरिष्यन् / अधरिष्यन्त, अहरिष्यन्त।

ध्यात्वा इति ध्यै धातोः अध्यास्यन्

क्षन्तुमिति क्षम् धातोश्च निष्पन्नम् { अक्षमिष्यन्त / अक्षमिष्यन्,

(3) अत्र हि शब्दः निश्चयार्थकः, पाण्डवस्य धार्म्मिकत्वे सन्देहाभावात्।

किञ्चिदित्यव्ययं कर्म्मणि द्वितीया ।
नराधिप इति विशेष्यपदम् पुंलिङ्गैकवचनम्
उक्त इति क्रियाया: अप्रधानं कर्म्म ।

6. Translate into Sanskrit :

Having listened to the aforesaid speech, the relatives of the deceased boy came back to the burning-ground. Then the tiger quickly fled, but ever and anon turned its face towards them, and howled. And now it was evening, and stars appeared in the sky, and the birds of the night showed themselves.

---

## TRANSLATION.

## VISHNU SAMHITA.

### CHAPTER XXXI.

**विष्णुसंहिता स्मृतिशास्त्रम् ।**

एकसप्ततितमोऽध्याय: ।

( पूर्व्वप्रकाशितात् परम् । )

न दन्तैर्नखलोमानि छिन्द्यात् ( २७ ) द्यूतं वर्जयेत् ( २८ ) बालातपसेवाञ्च ( २९ ) वस्त्रोपानद्दमाल्योपवीतानि अन्यधृतानि न धारयेत् ( ३० ) न संहताभ्यां पाणिभ्यां शिर उदरञ्च कण्डूयेत् ( ३१ ) न दधिसुमनसो प्रत्याचक्षीत ( ३२ ) सुप्तं न प्रबोधयेत् ( ३३ ) नोदक्यामभिभाषेत ( ३४ ) न म्लेच्छान्त्यजान् ( ३५ ) न परक्षेत्रे चरन्तीं गामावक्षीत ( ३६ ) न पिबन्तं वत्सकम् ( ३७ ) नाश्लीलं कीर्त्तयेत् ( ३८ ) ना

(27) One should not tear with teeth his nails and hair on his body. (28-29) One should avoid gambling and the rays of the morning sun. (30) One should not use clothes, shoes, garlands and sacred threads which have been used by others. (31) One should not scratch his head and belly with hands folded.(32) One should not refuse a present of flowers and coagulated milk. (33) One should not wake up a sleeping person.(34-35)One should not talk with a woman in her menses or with Mlachhas and low-caste people. (36-37) One should not inform any body of a cow feeding on the field of another, or of a calf sucking the breast of its mother. (38-39-40)One should not say any thing which is either obscene, untrue or displeasing to any

नृतम् ( ३९ ) नाप्रियम् ( ४० ) न कञ्चिन्मर्म्मणि स्पृशेत् ( ४१ ) नात्मानमवजानीयाद्दीर्घमायुर्जिजीविषुः ( ४२ ) न सर्पशस्त्रैः क्रीड़ेत् ( ४३ ) अनिमित्ततः खानि न स्पृशेत् ( ४४ ) शास्यं शासनार्थं ताड़येत् ( ४५ ) तत्र वेणुदलेन रज्ज्वा वा पृष्ठे ( ४६ ) [१] देवब्राह्मणशास्त्रमहात्मनां परीवादं परिहरेत् ( ४७ ) धर्म्मविरुद्धौ चार्थकामौ ( ४८ ) लोकविद्विष्टञ्च धर्म्ममपि [२] ( ४९ ) एवमाचारसेवी स्यात् ( ५० )।

आचाराल्लभते ह्यायु-
राचारादीप्सितां गतिम्।
आचाराद्धनमक्षय्य-
माचारो हन्त्यलक्षणम्॥ ५१॥

सर्व्वलक्षणहीनोऽपि
यः सदाचारवान् भवेत्।
श्रद्दधानोऽनसूयश्च
शतं वर्षाणि जीवति॥ ५२॥

इति एकसप्ततितमोऽध्यायः।

one. (41) One should not toucuh any one in his vitals. or (one should not touch any one to the quick.) (42) No one who wishes to live long should come to think disparagingly of his own self. (43) One should not play with snakes and weapons. (44) One should not touch the organs of his body, when there is no necessity of doing so. (45-46) One should beat for the sake of discipline, a person deserving punishment. But he should administer the beating on the back either with a string or with a bamboo-stick. (47) One should avoid the slander of Devas, Brahmins, the Sastras and great persons. (48) One should also avoid all wealth and kama (the object of one's desire) which stand in the way of dharma. (49) One should not observe a religious practice (enjoined in the sastras) which is disliked by men at large. (50) A man comes to observe achara in this way. (51) A man obtains long life, the wished for passage (to heaven) and inexhaustible wealth from the observance of achara. Acharas destry all bad omens. (52) A man who observes good acharas, envies none, and is reverentially disposed, lives for a hundred years even though he may be devoid of all signs of longivity.

श्रीराजेन्द्रचन्द्र शास्त्री।

श्रीश्रीदुर्गा

शरणम्।

# संस्कृतचन्द्रिका।

(१८१५ शाकाश्विनमासस्य।)

श्रीश्रीगणेशाय नमः।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव।
मायावलम्बते सेयमम्बा श्रीशिवसुन्दरी॥

## उद्भट-श्लोकाः।

"सिंहादुत्थाय कोपाद्दद्दद्द दड़ दड़ दड़्डावमाना भवानी।
दैत्यानां दिव्यशस्त्रैः स्तैं स्तैं स्तैं स्तैं स्तड़ तड़ तड़्त्तोड़यन्ती शिरांसि।
तेषां रक्तं पिबन्ती घं घं घं घं घुघुट्टु घुट्टु घुट्टु प्रे रयन्ती पिशाचान्।
टश्चा टश्चा हसन्ती च च च च चुखुट्टु खुट्टु खुट्टुः शाम्भवी नः पुनातु॥ २८॥"

"सगरसन्ततिसन्तरणेच्छया प्रचलितासि जवेन हिमालयात्।
इह हि मान्द्यमुपैति सरस्वतीयमुनयोर्व्विरहादिव जाह्नवी॥२९॥"

"नखानि विधुशङ्कया विरहिणी करेणावृणोत्
ततः किसलयभ्रमात् स्वयमथाक्षिपद्दूरतः।
ततो वलयशिञ्जिनी-भ्रमरगुञ्जिताशङ्कया
उहूरिति कुहूरवध्वनिधिया पतनमूर्च्छिता॥३०॥"

"अहमिव बह्वी भवती मम तु भवानिव भवानेव।
कति कुमुदवनानि विधोर्व्विधुरिव विधुरेव कुमुदिन्याः॥३१॥"

"अरिर्म्मित्रं विषं पथ्यं अधर्म्मो धर्म्मतां व्रजेत्।
सुप्रसन्ने हृषीकेशे विपरीते विपर्य्ययः॥ ३२॥"

"करिवर! सञ्चर धीरं मा मर्द्दय मर्म्मराणि च पत्राणि।
इह पुरतो गिरिकुहरे किमु सुखशायी न गोचरः सिंहः॥३३॥"

"विद्धा मृगी व्याधशिलीमुखेन मृगोऽपि तत्कातरवीक्षणेन।
असून् परित्यज्य गतव्यथा सा मृगस्य जीवावधिराधिरासीत्॥३४॥"

# महाप्रभुश्रीगौराङ्गदेवस्य जीवनचरितम् ।

कलेर्द्विसहस्राब्देष्वतीतेषु भारते बौद्धाः प्रादुरासन् । ते हि कपिलप्रदर्शितपथानुसरणेन विज्ञानवादं प्रकाशयामासुः । कपिलेनाङ्कुरितोऽसौ वादः, बौद्धानां युक्तिवारिसेचनेन प्रवृद्धो महातरुरूपेण परिणतश्चासीत् तस्य विषमयानि फलान्यास्वाद्य भूमण्डलवासिनः सर्व्वे चैतन्यशून्या जाताः । (१) एतदेव सौभाग्यम् यत्तादृश-धर्म्मविप्लवकालेऽपि अस्मिन् भारतवर्षे अखण्डितवेदव्रतपरायणा ब्राह्मणा निर्म्मनुजं गिरिकन्दरमाश्रित्य सामगानतत्पराः सन्तः स्वस्वसाजीव्यरक्षणं वेदधारणञ्च चक्रुः । येषामाहवनीयाग्नेः समुत्पन्ना नृपलाञ्छना महापुरुषा अग्निवंशाभिधेयान् स्वान् वंशान् विस्तारयामासुः । ब्रह्मतेजःसम्पन्नास्त एव ब्राह्मणाः वेदमयपरमपुरुषस्य प्रेरणया अचैतन्यानामार्य्यसन्तानानां पुनरुज्जीवनार्थं श्रीपुरुषसूक्त-श्रीरुद्रसूक्त श्रीदेवीसूक्त-श्रीविनायकसूक्तश्रीसूर्य्यसूक्ताख्यै र्वैदिकमन्त्रैस्तेषां शान्तिं विदधुः । येन सूक्तेन येषां शान्तिर्जाता ते तत्सूक्त-प्रतिपाद्यस्य परदेवतामूर्त्तिविशेषस्य मन्त्रेण दीक्षितास्तदुपासनायां प्रवृत्ताश्चासन् । तत्र यो हि पुरुषसूक्तेनाभिषिक्तः स तु तत्प्रतिपाद्यपरमपुरुषस्य भगवतः श्रीविष्णोरंश्यांशादिश्रीकृष्णश्रीनारायण-श्रीवासुदेव-श्रीराम-श्रीनृसिंहादिविग्रहस्य यथाशास्त्रं मन्त्रमयीं दीक्षां गृहीत्वा वैष्णव इत्यभिधां प्राप । यो हि श्रीरुद्रसूक्ताभिषेचनेन प्रबुद्धः स तु सर्व्वमङ्गलमयश्रीशिव-श्रीभवादिमूर्त्तिविशेषस्य आगमोक्तमन्त्रविशेषेण दीक्षितः शैवाभिधानं लेभे । यो हि परशक्तिमहाविद्यादिमूर्त्तिविशेषस्य तन्त्रोक्तमन्त्रेण दीक्षितः स तु शाक्ताख्यामाप । यो हि सर्व्वविघ्नविनाशनश्रीगणपतेर्मन्त्रेण दीक्षितः स तु गाणपत्याख्यया समाख्यातः । यो हि जगत्प्रकाशकस्य भगवतः सूर्य्यस्य मन्त्रेण दीक्षितः स तु सौरसंज्ञां लब्धवान् ।

(१) कपिलेन यागा नैव निषिद्धा अनेन तु ते निर्म्मूलिताः । सांख्यकारिका ।२३।सम्पादकः ।

एवं बौद्धाधिकारे विलुप्तप्राये पञ्चोपासकसम्प्रदायानां पुनः प्रवृत्तिः कलियुगपुरावृत्तानुसन्धानपराणां प्रसादात् ज्ञायते।

सनातनवैदिकसम्प्रदायेष्वेवं पुनःप्रवृत्तेष्वपि नैतत् सौभाग्यं स्थायित्वं भेजे। भारताकाशः पुनरकस्मात् जलदजालेनावृतो बभूव। उत्तरपश्चिमप्रदेशवासिभिर्यवनैः पुनःपुनःराक्रान्तमिदं भारतवर्षन्तैरेवाधिकृतम्। भारतराजलक्ष्मीर्यवनैरायत्तीकृतासीत्। हिमालयादासमुद्रं क्षितितलं यवनैरधिकृतं शासितञ्च। वैदिकाचारा यवनाचारैर्भ्रष्टाश्रया जाताः। दानवबलसदृशैर्ब्बलदृप्तैर्यवनबलैस्तीर्थानि कलुषीकृतानि, देवतायतानि विध्वस्तानि, पुस्तकानि दग्धानि,देवप्रतिमा भग्नाः,ब्राह्मणादिवर्णा जातिभ्रष्टाः कृताः,स्त्रियो दूषिताः, धनान्यपहृतानि च। आर्य्या यवनानां दासत्वमपि स्वीचक्रुः। भारतवर्षं दैन्यस्यान्तं गतम्। क्रमेण धर्म्मसम्प्रदायेष्वपि मतसन्निपातो व्यदृश्यत। सन्न्यासिनः सन्न्यासधर्म्मान् विसृज्य युद्धरता आसन्। ब्राह्मणाः ब्राह्मणधर्म्मं विस्मृत्य श्ववृत्तिमपि श्रेयसीं मेनिरे। सर्व्वे एव स्वस्वधर्म्मान् परित्यज्य यथेष्टं धर्म्मान्तरं वर्त्तनान्तरञ्च श्लाघ्यं मत्वा जगृहुः। एवं सनातनवैदिकधर्म्मस्य ग्लानिरभवत्। अधर्म्मोऽपि धर्म्मसिंहासनं शून्यं विलोक्य स्वराज्यसंस्थापने यत्नमकरोत्। स्वार्थसाधननिरताः केचित् दुष्टाः तन्त्रोक्ताचारव्याजेन उपदेवतार्च्चनपरायणाः सन्तः लोकान् वञ्चयन्तः व्यभिचारस्रोतोभिः पुण्यक्षेत्रं कलुषितं कर्त्तुमुद्यता आसन्। धर्म्मः स्थानभ्रष्टः, अधर्म्मस्तस्याधिकारमपाहरत्। तात्कालिकमेतत् चित्रमद्यापि लोमहर्षणमेव।

तिष्ठतु तावदसौ पुरातनी कथा। श्रीकृष्णचैतन्यस्याविर्भावकालीना वार्त्तापि न सन्तोषदायिनी। तदानीन्तनी राजनैतिकी अवस्थातीवशोचनीया। न केवलं आर्य्यराज्यानि यवनैर्व्विपर्य्यस्तानि अपि तु तदा द्वयोर्व्विदेशागतयोर्म्मोगलपाठानाभिधेययवनसम्प्रदाययोर्भारतश्रिये अदृष्टपरीक्षा प्रवृत्ता। सर्व्वत्रैवाराजकता अलक्ष्यत।

यद्यपि केचित् यवनोपेक्षिता आर्य्यराजाः व्यद्दश्यन्त, न ते निरातङ्काः स्वस्थाश्चासन्। सदैव ते यवनभयेन वित्रस्ता अभूवन्। यवना आर्य्याश्च सर्व्वे एव प्रजापालनकार्य्यं विस्मृत्य स्वस्वगौरवरक्षायां नियुयुजिरे। ईदृशे काले धर्म्मविपर्य्ययोऽवश्यम्भावी। अधर्म्मस्याभ्युत्थानमपि तथा। तथापि धर्म्मप्राणे भारते धर्म्मचर्चा न विलुप्ता। गिरिगुहावासिनो महान्तः भारतदुःखेनातिदुःखिता जाताः तेषां सा हृदयवेदनाष्टावरणवेष्टितां धरणीमण्डकटाहञ्च विभिद्य परव्योमस्थभगवद्धाम प्रविवेश। भक्तजनदुःखेन करुणामयः प्रभुर्भगवान् तस्योपायमुद्भावयामास। स हि अधर्म्मसङ्कुलमतएव दुःखार्णवनिमग्नं भारतमुद्दिधीर्षुरत्र साधकतमं श्रीमन्नामसंकीर्त्तनं प्रेषयामास। वयमत्र यस्य चरितवर्णने संप्रवृत्ताः स एवामुष्य नामसंकीर्त्तनस्य प्रथमः प्रवर्त्तकः। प्रसङ्गतो दूरमागता वयम् सम्प्रति प्रकृतमनुसरामः।

किञ्चिदधिकचतुःशतसमा व्यतीताः अस्मिन् वङ्गदेशे नवद्वीपनगरे श्रीगौराङ्गः प्रादुरासीत्। विश्वम्भर-गौरहरि-श्रीगौराङ्ग-महाप्रभु-श्रीकृष्णचैतन्यप्रभृतीनि तस्य नामान्यासन्।

श्रीगौराङ्गस्याविर्भावप्राक्काले सुबुद्धिरायनामा कश्चित् कायस्थो गौड़प्रदेशस्याधिपतिरासीत्। स तु होसेनखाँ इत्यभिधेयेन स्वधनापहारकेण तदपराधदण्डितेन केनचिन्निजभृत्येन च्युतराज्यः भ्रष्टधर्म्मश्च बभूव। स्मार्त्तपण्डितास्तं तुषानलेन प्राणत्यागरूपं प्रायश्चित्तमुपदिदिशुः। सुबुद्धिरायस्तस्मात् प्रायश्चित्ताल्लघुतरस्य प्रायश्चित्तस्याशया वाराणसीं जगाम। तदनन्तरं यद्भूतं तदग्रे वक्ष्यते। होसेनखाँ तद्राज्यमात्मसात् कृत्वा स्वनियुक्तैरत्याचारपरायणैः काजिनामककर्म्मचारिभिर्गौड़राज्यं शशास।

तदा नवद्वीपनगरी विविधवर्णिभिरापणविपणैरतीवसमृद्धिमती आसीत्। विद्यया चासौ समधिकगौरवशालिनी जाता। असौ नगरी वेदवेदाङ्गदर्शनस्मृतितन्त्रादिविविधशास्त्रानुशीलनेन चिर-

प्रसिद्धा। मिथिलाप्रदेशतो न्यायग्रन्थानयनेन सुविख्यातसार्व्वभौम-भट्टाचार्य्यः नवद्वीपवासी आसीत्। न्यायचर्च्चा तु पूर्व्वं मिथिलाया-मेवासीत्। रामभद्रसिद्धान्तवागीशनामा कश्चिन्नैयायिकः नवद्वीपे न्यायाध्यापनमारब्धवान्। सिद्धान्तवागीशस्य द्वौ शिष्यौ आस्ताम् वाचस्पतिः सार्व्वभौमश्च। तौ द्वावेव मिथिलाधीतन्यायशास्त्रस्य श्रीमहेश्वरस्य पुत्त्रौ। तदा तत्रैकोऽपरो नैयायिकः आसीत्। स तु नीलाम्बरचक्रवर्त्ती श्रीगौराङ्गस्य मातामहः।

सार्व्वभौमस्य सर्व्वशास्त्रनैपुण्यं श्रूयते। न्यायदीधितिकारः रघुनाथशिरोमणिः जगदीशभट्टाचार्य्यः भवानन्दः स्मार्त्त-रघु-नन्दनः तान्त्रिकप्रवरकृष्णानन्दः श्रीगौराङ्गश्च सर्व्वे एव सार्व्व-भौमस्य शिष्याः। सार्व्वभौम एव तेषां पाण्डित्यस्य निदानम्। स एव नवद्वीपस्य विद्यागौरवस्य नव्यन्यायस्य च प्रवर्त्तकः। नवद्वीपस्य दुर्भाग्यम् यदेष सार्व्वभौमः सुचिरकालं नवद्वीपे नावसत्। उड़िष्या-धिपतिः प्रतापरुद्र-गजपतिस्तस्य पाण्डित्यगौरवेणाकृष्टस्तं स्वराज-धानीं निनाय। सार्व्वभौमः शेषजीवनं तत्रैवोवास।

जगन्नाथमिश्रनामकः कश्चिद्वैदिकः सार्व्वभौमस्य सहाध्यायी आसीत्। स तु श्रीहट्टनिवासिनः उपेन्द्रमिश्रस्य तनयः। जगन्नाथः सप्तभ्रातॄणां तृतीयः। स तु न्यायाध्ययनाय नवद्वीपमाजगाम। तत्रैव नीलाम्बरचक्रवर्त्तिनः कन्यायाः शचीदेव्याः पाणिग्रहणं कृत्वा अवसत्। जगन्नाथः शचीदेव्यां क्रमेणाष्ट कन्याः उत्पादयामास। नवमः विश्व-रूपनामा पुत्त्रो बभूव। विश्वरूपस्योपनयनोचिते काले जगन्नाथः पत्न्या सह जन्मस्थानं श्रीहट्टमागत्य तत्रैव वासाय मनोदधे। परन्तु जनन्याः शोभादेव्याः आदेशात् पुनर्नवद्वीपमाजगाम। शोभादेवी स्वप्ने कञ्चित्महापुरुषं शचीगर्भस्थं ददर्श। तेनैव तदा पुत्त्रस्य नव-द्वीपप्रेषणार्थं समादिष्टवती। एतदेव जगन्नाथस्य पुनर्नवद्वीपागमन-कारणमिति जनश्रुतिर्व्वर्त्तते। ( क्रमशः। ) गोस्वामि श्रीश्यामलाल शर्म्मणः।

# नालिकास्त्रम् ।

( पूर्व्वप्रकाशितात् परम् । )

---

अधुना वयं अस्त्रस्यास्य प्राचीनत्वप्रदर्शनार्थं आर्य्याणां प्राचीन-ग्रन्थेभ्यः कानिचित् प्रमाणान्युद्धृत्य पाठकेभ्यः उपहरामः। आर्य्याणां ग्रन्थनिचयेषु अस्य यादृशी आकृतिर्यादृशं कार्य्यादिकञ्च वर्त्तते, तत् सर्व्वं निरपेक्षभावेन समालोच्य आधुनिक "वन्दुक-कामानादिना" सहास्य सादृश्यं नास्तीति वक्तुं न कोऽपि समर्थः स्यादेव। अस्त्रस्यास्य नलिका-नालिक-नालीक-सूर्म्मी-शतघ्नी-प्रभृतयः कतिपये पर्य्यायगताः शब्दा दृश्यन्ते। महाभारतस्य बहुषु स्थानेषु अस्य प्रयोगो दृश्यते। यथा—

"ब्राह्मणार्थे यतन्तस्ते शीघ्रमन्वगमन् मृगम्।
कर्णि-नालिक-नाराचानुत्क्षिपन्तो महारथाः।
नाविध्यन् पाण्डवास्तत्र पश्यन्तो मृगमन्तिकात्॥"

इति महाभारते। ३।३१०।१७॥

तथा च तत्रैव। ५।३४।७८।

"कर्णि-नालिक-नाराचान् निर्हरन्ति शरीरतः।
वाक्शल्यस्तु न निर्हर्त्तुं शक्यो हृदिशयो हि सः॥"

तथा च तत्रैव। ५।४२।३।

"अस्यतः कर्णिनालीकान् मार्गणान् हृदयच्छिदः।
प्रत्येता न समः कश्चित् युधि गाण्डीवधन्वनः॥"

तथा च तत्रैव। ३।१७। २। १९।

"ततो नालिकनाराचैर्भल्लैः शक्त्यृष्टितोमरैः।
प्रत्यघ्नन् दानवेन्द्रा मां क्रुद्धास्तीव्रपराक्रमाः॥"

( बाहुल्यभिया महाभारतस्य स्थानान्तरात् नोद्धृतान्यन्यानि वचनानि॥ )

रामायणेऽप्यस्य प्रयोगो वर्त्तते यथा।

"क्रोधादिन्द्रजिता येन पुरा शक्रोऽपि निर्जितः।
रुक्मपुङ्खैरजिह्माग्रै रधोगतिभिराशुगैः॥
नालिकैरथ नाराचैर्भल्लैरथ विकर्णिभिः।
निहतो लक्ष्मणः शेते दिव्यमादाय कार्म्मुकम्॥"

इति रामायणे। ६।२०।२६॥

अत्र केचित् वदन्ति,-नालिकास्त्रं नाधुनिक "वन्दुक-गोलकादि"-सदृशं परन्तु कर्णि-नाराचादिसाहचर्य्यात् बाणविशेषएव प्रतिभाति। सत्यमिदम्, परन्तु नालिकास्त्रस्य बाणविशेषत्वेऽपि शरादेरिव नास्य धनुर्नोद्यता दीर्घता वा। अस्त्रमिदन्तु नलयन्त्रेण नोदितत्वात् नालिकं क्षुद्रं बाणाकृति भवत्येव। तथाचोक्तं शार्ङ्गधरधनुर्व्वेदे।

"नालिका लघवो बाणा नलयन्त्रेण नोदिताः।
अत्युच्चदूरपातेषु दुर्गयुद्धेषु ते मताः॥"

अनेन वचनेन नालिको नलयन्त्रनोदितः क्षुद्राकृतिर्व्बाणविशेषो भवतेएव। बाणोऽयं पूर्व्वमपि सीसक-लौहादिधातुविशेषैर्निर्म्मित आसीदितेएतद्विषयकवचनानि परतो यथाशक्ति प्रदर्शयिष्यामः। परन्तु अधुनास्माभिः कथ्यते,महाभारतादुक्तनालिकास्त्रं शरादिवत् न धनुर्नोद्यम् किन्तु आधुनिकवन्दुक-नोदितगोलकादिवत् नलयन्त्रनोदितम् किमपि आसीदिति सुधीभिर्व्विभाव्यम्।

नलयन्त्रनोदितवस्तुन एव नालिकाभिधेये प्राप्तेऽपि येन यन्त्रेण नोदितमासीत् तदपि शब्दशक्त्या नालिकं कथ्यते दृश्यते च तत्-प्रमाणं बहुषु ग्रन्थेषु इति। तथा च नीतिप्रकाशिकायाम्।

"नालिका ऋजुदेहा स्यात् तन्वङ्गी मध्यरन्ध्रिका।
मर्म्मच्छेदकरी नीला— ॥"

एतत्कार्य्यादिकमपि तत्रैवोक्तम्। यथा,—

"ग्रहणं धापनं चैव सूतस्त्वेति गतित्रयम्।
तामाश्रितं विदित्वा तु जेतासन्नान् रिपून् युधि॥"

आदौ ग्रहणम् पश्चात् अग्निसंयोजनम् तत्पश्चात् विद्धीकरणम् इत्येतत् त्रिविधकार्य्यं यस्य कस्याप्यस्त्रस्य भवति तदस्त्रम् आधुनिकबन्दुकसदृशं नेति वक्तुं कोऽपि बुद्धिमान् साहसी स्यादित्यस्माकं मनसि स्थास्नु न च्चणं वर्त्तते।

अस्त्रस्यास्यातीवपुरातनत्वज्ञापनार्थं वैदिकप्रमाणमपुरस्कृत्य प्रदर्श्यते। यथा, तैत्तिरीयसंहितायाम्। ५।४।७।३-४।

"एषा वै सूर्मी कर्णकावत्येतया ह स्म वै देवा असुराणां शततर्हांस्तृंहन्ति यदेतयासमिधमादधादि वज्रमेवैतत् शतघ्नीं यजमानो भ्रातृव्याय प्रहरति।"

अत्र भट्टभास्करकृतं भाष्यम्।

"ज्वलन्ती लौहमयी स्थूणा सूर्मी। गौरादित्वात् ङीष्। कर्णकावती अन्तःसुषिरवती अन्तर्ज्वलन्ती चेत्यर्थः। देवा एतया असुराणां मध्ये शततर्हान् एकप्रहारेण शतस्य हन्तॄन् तृंहस्ति घ्नन्ति स्म। तृह हिंसायां रौधादिकः तस्मादेतया ऋचा समिधमादधानो यजमानः वज्रं इन्द्रायुधसदृशं एव एतत् शतघ्नीं पूर्व्वोक्तां सूर्मीं भ्रातृव्याय शत्रवे प्रहिणोति।"

अत्र सायणाचार्य्यकृतभाष्यम्।

"ज्वलन्ती लौहमयी स्थूणा सूर्मी। सा च कर्णकावती छिद्रवती। अतएव ज्वलन्तीत्यर्थः। तत्समानेयमृक्। एकेन प्रहारेण शतसङ्ख्याकान् मारयन्तः शूराः शततर्हाः। असुराणां मध्ये तादृशान्, एतया ऋचा देवा हिंसन्ति। अनया समिदाधानेन शतघ्नीमिमां ऋचं वज्रं कृत्वा वैरिणं हन्तुं प्रहरति।"

पूर्व्वमेवास्माभिरुक्तम्, हरिणं जिघांसुभिः पाण्डवैर्नालिकाभिधेयाः क्षुद्राकृतयो ये बाणा निक्षिप्तास्तेऽपि आधुनिकगोलकवत् सीसकादिनिर्म्मिता आसन्। अथर्व्ववेदस्यैकत्रापि सीसकैः शत्रुनाशकथा श्रूयते।

यथा, तत्रैव। १।१६।२ ; ४।

"सीसायाधग्राह वरुणः सीसायाग्निरुपावति।
सीसं म इन्द्रः प्रायच्छत् तदङ्ग यातु चातनम्।"
"यदि नो गां हंसि यद्यश्वं यदि पूरुषम्।
तं त्वा सीसेन विध्यामो यथा नोऽसो अवीरहा॥"

तथा, शुक्रनीतौ। ४। ६। २०४।

"गोली लौहमयी गर्भगुटिकः केवलोऽपि वा।
सीसस्य लघुनालार्थे ह्यन्यधातुभवोऽपि वा॥"

"लघुनालार्थे क्षुद्रनालास्त्रनिमित्तं केवलः अविमिश्र इत्यर्थः लौहमयः गोलः गर्भगुटिकः अथवा सीसस्य गर्भगुटिकः अपि वा अन्य-धातुमयो गर्भगुटिको ग्राह्य इति शेषः। इति तट्टीका॥

एतेन ज्ञायते सम्यक्, न केवलमधुना, परन्तु पूर्व्वस्मिन्नपि काले सीसकादिधातुनिर्म्मितगोलकादीनां व्यवहारः समभवदिति।

महाभारतादौ नालिकास्त्रस्य आकृतिविषयकवचनदर्शना-भावात् आधुनिकवन्दुकादिना सहास्य सौसादृश्ये बहूनामेव संशयो जायेत इत्याशङ्क्य दानवगुरुशुक्राचार्य्यकृतनीतिसारात् कानिचित् वचनानुद्धृत्य प्रदर्श्यन्ते। तानि तु सुस्पष्टतया आकृत्यादिविषये-ऽतीवविशदानि सन्देहभञ्जकतया चातीवमनोरमाणि।

तथा च शुक्रनीतौ। ४।७।१९१-२००।

"अस्यते क्षिप्यते यत्तु मन्त्रयन्त्राग्निभिश्च तत्।
अस्त्रं तदन्यतः शस्त्रमसिकुन्तादिकञ्च तत्॥
अस्त्रन्तु द्विविधं ज्ञेयं नालिकं मान्त्रिकं तथा।
यदा तु मान्त्रिकं नास्ति नालिकं तत्र धारयेत्॥
सह शस्त्रेण नृपतिर्व्विजयार्थन्तु सर्व्वदा।
लघुदीर्घाकारधाराभेदैः शस्त्रास्त्रनामकम्॥
प्रथयन्ति नवं भिन्नं व्यवहाराय तद्विदः।
नालिकं द्विविधं ज्ञेयं वृहत्-क्षुद्रप्रभेदतः॥

तीर्थ्यगूर्द्धच्छिद्रमूलं नालं पञ्चवितस्तिकम्।
मूलाग्रयोर्लक्षभेदि तिलविन्दुयुतं सदा॥
यन्त्राघाताग्निकृद्ग्रावचूर्णधृक्कर्णमूलकम्।
सुकाष्ठोपाङ्गबुध्नञ्च मध्याङ्गुलविलान्तरम्॥
स्वान्तेऽग्निचूर्णसन्धातृ शलाकासंयुतं दृढ़म्।
लघुनालिकमप्येतत् प्रधार्य्यं पत्तिसादिभिः॥
यथा यथा तु त्वक्सारं यथा स्थूलविलान्तरम्।
यथा दीर्घं वृहद्गोलं दूरभेदि तथा तथा॥
मूलकीलभ्रमाल्लक्ष्यसमसन्धानभाजि यत्।
वृहन्नालिकसंज्ञं तत् काष्ठबुध्नविनिर्म्मितम्॥
प्रवाह्यं शकटाद्यैस्तु सुयुक्तं विजयप्रदम्॥"

अधुना सुधियो विवेचयन्तु,—यदस्त्रं आकृत्या सार्द्धद्विहस्तपरिमितम्, सच्छिद्रमूलदेशम्, अग्निचूर्णधारकम्, *, शलाकासंयुतञ्च; लक्ष्यभेदसमये यस्य यन्त्रस्थप्रस्तरखण्डात् वह्निरुत्पतति, यस्य गोलकनिर्गमनविलं अङ्गुलपरिमितम्, तदस्त्रमधुनातनवन्दुकास्त्रस्य सादृश्यं लप्स्यत इत्यत्र कः सन्देहः। यदस्त्रञ्च काष्ठबुध्नविनिर्म्मितं तथा शकटाद्यैश्च प्रवाह्यम्, तदस्त्रमपि इदानीन्तनकामानाख्यस्य तुल्यतां प्राप्स्यतीत्यत्र को विवादावसरः। अस्त्रमिदं यथा यथा त्वक्सारं, स्थूलविलान्तरं दीर्घं वृहद्गोलकयुक्तञ्च भवेत्, तथा तथा दूरभेदि स्यादिति, तत्रैव कथितमासीत्। अतः कथ्यते, बहुकालात् पूर्व्वं आर्य्यमिश्रा अपि तथा आसन्, यथा विवेचयन्ति तद्वंशजाता इदानीन्तनराजचक्रवर्त्तिन इति। अपि च अस्त्रस्यास्य कार्य्यादिकं तत्रैव यथा यथा वर्त्तते तत्समालोचनया अत्र कोऽपि सन्देहो न स्थास्यतीति निश्चित्य तदप्युद्धृत्य प्रदर्श्यते।

यथा, शुक्रनीतौ। ७। ४। २१०—२१२।

"नालास्त्रं शोधयेदादौ दद्यात्तत्राग्निचूर्णकम्।
निवेशयेत्तद्दण्डेन नालमूले यथादृढ़म्॥

* बारुद इति यस्य प्रसिद्धिः।

ततः सुगोलकं दद्यात् ततः कर्णेऽग्निचूर्णकम् ।
कर्णचूर्णाग्निदानेन गोलं लक्ष्ये निपातयेत् ॥
लक्ष्यभेदी यथा बाणो धनुर्ज्याविनियोजितः ।
भवेत् सन्धाय तु तथा——————————॥"

पाठकाः ! विवेचयन्तु भवन्तः, यदस्त्रप्रयोगसमये आदौ अग्नि-चूर्णदानं (बारुद), ततो दण्डेण लदेशे तमूस्य प्रवेशनम्; ततो गोलकसमर्पणम् (गुलि), ततो ऽग्निसंयोगेन लक्ष्ये गोलकस्य निक्षेपणम्। तदस्त्रं वन्दुकादिभिन्नं किमपि न भवत्येव। अधुना कथ्यते, एतादृशसुस्पष्टप्रमाणदृष्ट्यापि यदि वयं बन्दुककामानादि सदृशं किञ्चिदपि पूर्व्वेषां नास्तीति वक्तुं समर्थास्मस्तदा निश्चितमेव वयं कुपुत्रा इव तेषां सुसम्पदामये नाधिकारिणोभविष्याम इति।

परन्तु, ये हि तादृश सुस्पष्टप्रमाणदर्शनेन मत्सरिणः कथयन्ति, "प्रक्षिप्तान्येव तद्वचनानि, आधुनिकाः खलु शुक्रनीतिप्रभृतयो ग्रन्थाः, न प्रमाणार्हाण्येव तद्वचनानि।" ते यदि भिन्नधर्म्मावलम्बिनोऽनधि-गतार्य्यमाहात्म्याः सन्ति, तदा तदुत्तरदानार्थमस्माकमौषद्ध्सनमेव श्रेयः इति मन्यामहे; किन्तु, यदि ते आर्य्यकुलधुरन्धरा भवन्ति, तदा तान् कथयामि, "यतो यूयमार्य्यसन्ताना इति कथ्यते ततः पूर्व्वेषां गौरवरक्षार्थं यत्नपरैर्भवितव्यमिति।"

(क्रमशः।)

श्रीनन्दलाल विद्याविनोदः।

---

## तत्त्वप्रपञ्चः।

(पूर्व्वप्रकाशितात् परम्।)

तथा च योगसूत्रम् "हेयं दुःखमनागतम्" इति २।१६। अत्राशङ्क्यते, ननु कदाचिदपि अवर्त्तमानमनागतावस्थं दुःखं उत्पपत्स्यते न वा

उत्पत्स्यते तत्रैकतरनिश्चयाभावात् भविष्यद्दुःखमप्रामाणिकमेव स्वीकुर्य्याम्, अतोऽलीकस्य तस्य निवृत्तौ आकाशभित्तौ चित्रलेखन-निषेधवत् पुरुषार्थत्वं नैवोपपद्यते। मैवम्, त्रैलोक्यां स्वस्वकार्य्यजनन-शक्तिः वह्नौ दाहादिशक्तिवत् समग्रोपादानकारणद्रव्यव्यापिनी वर्त्तते। सा च शक्तिः अनागतावस्थतत्तत्कार्य्यरूपा। तथाहि मृत्तिकानां शक्तिर्घटः तन्तूनां शक्तिश्च पटः अनागतावस्थः कार्य्यरूपः। अर्थात् मृदवस्थायां सूक्ष्मरूपेण घटः सूत्रावस्थायां सूक्ष्मरूपेण पटो वर्त्तत एव। इयमेवोपादानकारणस्वरूपयोग्यतीच्यते। एवं चित्तेऽपि सूक्ष्मरूपेण सर्व्वदैवासंख्यं दुःखं लुक्कायितं वर्त्तते, अतो यावच्चित्त-सत्ता, तावदेव दुःखसत्तानुमीयते। तन्निवृत्तिश्च पुरुषार्थः, न तु अलीकस्य तस्येति।

अथ अनागतावस्थस्य कस्मिन्नपि काले उत्पत्स्यमानस्य तुष्णीं स्थितस्यैव दुःखस्य निवृत्त्यर्थं किमिति घोरतरो महानाड़म्बरः? न हि पूर्व्वपर्व्वतस्य पूर्व्वगह्वरे व्याघ्र उत्पत्स्यते इति भीत्या अद्यैव कश्चिन्मूर्च्छामापद्यते, शेलशूलमुषलमुद्गरं वा सज्जीकुरुते, नहि कश्चिद्वा पूर्व्वमहोदधेः पूर्व्वरोदसि परबलमागमिष्यतीति किंवदन्तीं श्रुत्वा असमर्थतया स्वपराजयमाशङ्कमानोऽपमानेनाद्यैव गलपाशेन प्राणांस्त्यजतीति।

सत्यं अस्माकमदूरदर्शिनां तथैव, किन्तु ये खलु साधवः सुदूर-दर्शिनः दूरवीक्षणदर्शका इव अतिव्यवहितमपि प्रच्छन्नं दुःखं सन्नि-धावागतमिव स्पष्टं मन्यमाना बिभ्यति। साधवो हि कोमलहृदयाः अस्माकमक्षिगोलकल्पाः, कथमिति चेत् यथा अस्माकं चक्षुषि लग्नं सूक्ष्ममपि लूतासूत्रं दुःखमुत्पादयति नापरावयवेषु तथा सूक्ष्मरूपं चित्ते स्थितमपि दुःखं साधूनुद्वेजयति, अतस्तादृशस्य सूक्ष्मावस्थया चित्ते स्थितस्य दुःखस्य निवृत्तौ पुरुषकारोऽवश्यमपेक्षणीयः।

दुःखनिवृत्तौ पुषार्थस्तु प्रकृतिपुरुषाविवेकानलेन दुःखबीजभर्ज्जनम्,

भ्रष्टात्तु बीजात् नाङ्कुरो जायते, बीजभूतन्तु अनागतावस्थं दुःखम्। तस्य भर्ज्जनम्। बीजभर्ज्जनञ्च अविद्यासहकार्य्युच्छेदमात्रम्। ज्ञानमेव अविद्योच्छेदकमिति सर्व्वशास्त्रसिद्धम्। इति तु जीवन्मुक्तदशायाम्। विदेहकैवल्ये तु चित्तेन सह विनाश इत्यवान्तरविशेषः।

दुःखविनाशोऽपि स्वोपादानकारणलयः। दुःखकारणन्तु चित्तम्, अतो यावत् चित्तं स्थास्यति तावद्दुःखमपि। चित्तनाशे सति स्वोपादानकारणनाशात् दुःखस्यापि कार्य्यस्य नाशः। सति तु कारणे कञ्चित् कालं निवृत्तमपि दुःखं पुनराविर्भविष्यति।

अनन्तस्य दुःखस्य निमित्तकारणमप्यनन्तम्। यथा—रोगः शत्रुः दारिद्र्यञ्च। एकस्मिन् दुःखे कथञ्चित् निवृत्तेऽपि पुनरन्यद्दुःखमुदेष्यति। कथमितिचेत् दुःखस्योपादानकारणं यतो वर्त्तते, चित्तनाशे तु चिराय मूलोच्छेदात् न कदापि किञ्चिदपि दुःखमुत्पत्स्यते, परन्तु अवश्यमेव चिरायैव दुःखं विलीयते। इयमेवात्यन्तिकी दुःखनिवृत्तिः सैव मुक्तिरिति गुणबन्धनात्। वर्त्तुलार्थस्तु इयं प्रकृतिः अहं पुमान्, संसारादिकन्तु प्राकृतम्, अहमप्राकृतः, एवं विवेकसाक्षात्कारात् अज्ञानं तिरोभवति ततश्च "अहं पापकारी" "अहं पुण्यकारी" "अहं सुखभोगी" अहञ्च दुःखभोगी" इत्येवमखिलाभिमानो निवर्त्तते। अभिमाननिवृत्तौ अभिमानजन्यरागद्वेषादयो निवर्त्तन्ते, रागद्वेषादिषु निवृत्तेषु अविद्यारागादिसहकार्य्युच्छेदरूपेण वह्निना विवेकात् प्रागुत्पन्नानि कर्म्माणि च दह्यन्ते। दग्धबीजभावाच्च तानि सुकृतदुष्कृतानि कर्म्माणि विपाकं नारभन्ते। केवलं प्रारब्धकर्म्मभोगार्थं शरीरमेव ध्रियते। प्रारब्धक्षयानन्तरञ्च शरीरपातात् चित्तनाशात् पुनर्ज्जन्माभावेन त्रिविधदुःखात्यन्तनिवृत्तिरूपोऽत्यन्तपुरुषार्थो विदेहमोक्षः सम्पद्यते इति। इदमेव सूत्रकारोऽप्याह "अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः" इति ॥ १ ॥

तथा च मार्कण्डेये । ३७ श्राध्याये । ३०-४२ ।

"नाहमुर्व्वी न सलिलं न ज्योतिरनिलो न च ।
नाकाशं किन्तु शारीरं समेत्य सुखमिष्यते ॥
मनस्यवस्थितं दुःखं सुखं वा मानसञ्च यत् ।
यतस्ततो न मे दुःखं सुखं वा नह्यहं मनः ।
नाहङ्कारो न च मनो बुद्धिर्नाहं यतस्ततः ।
अन्तःकरणजं दुःखं पारक्यं मम तत् कथम् ॥
नाहं शरीरं न मनो यतोऽहं पृथक्शरीरान्मनसस्तथाहम् ।
तत् सन्तु चेतस्यथवापि देहे सुखानि दुःखानि च किं ममात्र ॥"
"तस्मान्नमेऽरि र्न च मेऽस्ति दुःखं न मे सुखं नापि पुरं न कोषम् ।
न चाश्वनागादि बलं न तस्य नान्यस्य वा कस्यचिद्वा ममास्ति ॥"

तथा च श्रुतयः ।

"योऽकामयमानो योऽकामनिष्कामो न तस्य प्राणा उत्क्रामन्ति इहैव समवलीयन्ते ।"

"आत्मानञ्चे द्विजानीयादमयमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसञ्चरेत् ॥"
"यदा सर्व्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
अथमर्त्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥"
"कामान् यः कामयते मन्यमानः स कर्म्मभिर्ज्जायते तत्र तत्र ।
पर्य्याप्तकामस्यात्कृतात्मनस्तु इहैव सर्व्वे प्रविलीयन्ति कामाः ॥"

इत्याद्याः । स्मृतयश्च यथा———

"रागद्वेषादयो दोषाः सर्व्वे भ्रान्तिनिबन्धनाः ।
कार्य्यो ह्यस्य भवेद्दोषः पुण्यापुण्यमितिश्रुतिः ॥
तद्वशादेव सर्व्वेषां सर्व्वदेहसमुद्भवः ॥"

मोक्षधर्म्मे च ।

"इन्द्रियाणीन्द्रियार्थांश्च नोपसर्पन्त्यतर्षुलम् ।
हीनश्च करणैर्देही न देहं पुनरर्हति ॥
तस्मात्तर्षात्मकाद्रागाद्बीजाज्जायन्ति जन्तवः ॥" इति साङ्ख्यसारे ।

इति तत्त्वप्रपञ्चे दुःखास्तिविवेको नाम द्वितीयोऽध्यायः ।

# पूर्ब्बकालीनाः कथं दीर्घायुषः ?

पूर्ब्बप्रकाशितात् परम्।

उक्तं पञ्चमसंख्यायां "इन्द्रियोपक्रमणीयाध्यायस्तु" इत्यादि। स एवाध्यायोऽत्रास्य प्रबन्धस्याङ्गीभूतइंरेजिभाषयानूद्य विन्यस्यते। यथा चरकसंहितायां सूत्रस्थाने इन्द्रियोपक्रमणीयाध्याये। ४।

तस्मादात्महितं चिकीर्षता सर्ब्बेण सर्ब्बं सर्ब्बदा स्मृतिमास्थाय सद्वृत्तमनुष्ठेयं। तद्ध्यनुष्ठानं युगपत् सम्पादयत्यर्थद्वयमारोग्यमिन्द्रियविजयञ्चेति।

"Hence all persons desirous of achieving their own good, should always adopt with heedfulness the practices of the good."

"By observing such practices one simultaneously accomplishes two objects, *viz*, the preservation of health and the subjugation of the senses."

तत्सद्वृत्तमखिलेनोपदेक्ष्यामोऽग्निवेश।

"I shall, therefore, O Agniveca, inculcate to thee in full what the practices of the good are."

तद्यथा—

देवगोब्राह्मणगुरुवृद्धसिद्धाचार्य्यानर्च्चयेत्। अग्निमुपाचरेत्। ओषधीः प्रशस्ता धारयेत्। द्वौकालावुपस्पृशेत्। मलायतनेष्वभीक्ष्णं पादयोश्च वैमल्यमादध्यात्। त्रिः पक्षस्य केशश्मश्रुलोमनखान् संहारयेत्। नित्यमनुपहतवासाः सुमनाः सुगन्धिः स्यात्।

"They are as follows: one should worship the deities, kine, Brahmanas, seniors, aged men, persons crowned with ( ascetic ) success, and preceptors. One should tend one's sacrificial fires. One should bear on one's person efficacious herbs. One should bathe twice in the day, once in the morning and once again in the evening. One should always keep one's

outlets for the passage of impurities ( *viz.*, urine and excreta ), and one's feet, perfectly clean and well washed. Within a fortnight one should have three shaves and thrice pare one's nails. One should every day wear clean and well-washed clothes. One should be always cheerful, and always use agreeable perfumes."

साधुवेशः प्रसाधितकेशो मूर्द्धश्रोत्रघ्राणपादतैलनित्यो धूमपः स्मितपूर्व्वाभिभाषी सुमुखो दुर्गेष्वभ्युपपत्ता होता यष्टा दाता चतुष्पथानां नमस्कर्त्ता। बलीनामुपहर्त्ता अतिथीनां पूजकः। पितृभ्यः पिण्डदः। काले हितमितमधुरार्थवादी। वश्यात्मधर्म्मात्मा हेतावीर्ष्युः फलेनेर्ष्युः निश्चिन्तो निर्भीकः ह्रीमान् धीमान् महोत्साहः दक्षः क्षमावान् धार्म्मिक आस्तिकः। विनयबुद्धिविद्याभिजनवयोवृद्धसिद्धाचार्य्याणां उपासिता छत्री दण्डी मौली सोपानत्को युगमात्रदृगनुचरेत्।

"One should wear handsome and decent garments, and dress one's hair ( by combing and parting it ). One should every day apply oil to one's head, ears, nose, and feet. One should inhale smoke ( under the restrictions and in the way indicated before ). One should welcome a person one meets ( without waiting to be spoken to ). One should speak agreeable words with smiles. One should protect another fallen into distress. One should perform Sacrifices ( in honor of the deities ) and make gifts. One should bend one's head in reverence at seeing the spot where four roads meet. One should make offerings to the deities. One should reverence one's guests, and offer cakes ( in *craddhas* ) unto one's deceased ancestors. At the proper time one should be sparing of speech and say what is beneficial and of sweet import. One should keep one's senses under subjugation. One should be righteous-souled. One should cherish emulation in respect of the causes of other people's prosperity, but should never be jealous of that prosperity. One should not hesitate in indecision. One should be fearless. One should be modest.

One should sharpen one's faculty of judgment. One should be strenuous in exertions, possessed of cleverness and ability, virtuous, and endued with faith. One should reverence modesty and intelligence and learning and good birth and aged men and persons crowned with ascetic success, and preceptors. One should use umbrellas, sticks, turbans, and shoes."

मङ्गलाचारशील: कुचेलास्थिकण्टकामेध्यकेशतूषोत्कारभस्मकपालस्नानवलिभूमीनां परिहर्त्ता। प्राक् श्रमाद्व्यायामवर्ज्जी स्यात्। सर्व्वप्राणिषु बन्धुभूत: स्यात्। क्रुद्धानामनुनेता भीतानामाश्वासयिता। दीनानामभ्युपपत्ता सत्यसन्ध: सामप्रधान: परपरुषवचनसहिष्णु: अमर्षघ्न: प्रशमगुणदर्शी रागद्वेषहेतूनां हन्ता। नानृतं ब्रूयात्। नान्यस्वमभिलषेत्। नान्यस्त्रियम्। न वैरं रोचयेत्। न कुर्य्यात् पापम्। न पापे: पापी स्यात्। नान्यरहस्यमवगमयेत्।

"One should be observant of all auspicious acts. One should avoid such spots as are strewn with filthy rags and bones and horns, as are unholy (such as cemeteries and crematoriums), and such as are also strewn with hair, chaff, sweepings and rubbish, and ashes, and skulls, and flowers that have been used in worship. One should not indulge in physical exercises when one is tired. One should constitute oneself the friend of all creatures. One should seek to pacify the angry, assure the frightened, and redress the woes of the distressed.

One should firmly adhere to truthfulness, and lead a life of tranquillity (by abstaining from injuring any creature). One should accustom oneself to calmly bear the harsh speeches of others. One should subdue wrath. One should be a careful observer of the attribute of peacefulness. One should remove the very roots of anger and aversion or haste. One should never tell an untruth. One should never appropriate what belongs to others. One should not covet the prosperity of another. One should not fancy another's wife or desire to provoke hostilities. One should not commit sins or keep com-

pany with those that are sinful. One should not speak of another man's faults. One should not seek to penetrate the secrets of other people."

नाधार्म्मिकैर्न नरेन्द्रद्विष्टैः सहासीत। नोन्मत्तैर्न पतितैर्न भ्रूणहन्तृभिर्नक्षुद्रैर्न दुष्टैः। न दुष्टयानान्यारोहेत। न जानुसमं कठिनमासनमध्यासीत।

"One should not have friendly intercourse with unrighteous persons, or with those that are disloyal to the king, or with those that are stark mad, or with those that are fallen (degraded for sinfulness), or with those that are guilty of fœticide, or with those that are mean, or with those that are wicked. One should not ride vicious animals. One should not sit upon a hard seat of the height of one's knee."

नानास्तीर्णमनुपहितविशालमसमं वा शयनं प्रपद्येत। न गिरिविषममस्तकेष्वनुचरेत्। न द्रुममारोहेत्।

"One should not sleep on a bed that hasnot been properly stretched, that is without pillows, that is not spacious, and that is not smooth and level. One should not wander or walk over the uneven summits of mountains. One should not climb trees."

नजलोग्रवेगमवगाहेत। कुलच्छायां नोपासीत। नाग्न्युत्पातमभितश्चरेत् नोच्चैर्हसेत्॥ न शब्दवन्तं मारुतं मुञ्चेत्। नासंवृतमुखो जृम्भां क्षवथुं हास्यं वा प्रवर्त्तयेत्। न नासिकां कुष्णीयात्। न दन्तान् विघट्टयेत्। न नखान् वादयेत्। नास्थीन्यभिहन्यात्। न भूमिं विलिखेत्। न छिन्द्यात्तृणम्। न लोष्ट्रं मृद्नीयात्।

"One should not plunge into a rapid stream. One should not enjoy the shade of a jujube tree. One should not walk about in the vicinity of a place where a fire has broken out. One should not laugh aloud. One should not pass wind loudly. One should not yawn, or sneeze, or laugh without covering one's face. One should not scratch or rub one's nose.

One should not grind one's teeth. One should not scratch one's nails. One should not strike bone against bone. One should not scratch the soil. One should not tear grass (idly while talking.) One should not (idly) grind little clods of earth or soft pebbles."

न विगुणमङ्गैश्चेष्टेत। ज्योतींष्यग्निञ्चामेध्यमशस्तञ्च नाभिवीक्षेत। न हुं कुर्य्याच्छवम्। न चैत्यध्वजगुरुपूज्याशस्तच्छायामाक्रामेत्।

"One should not, while relaxing one's limbs, make ugly attitudes. One should not cast one's eyes on dazzling luminaries, and on fires that are unholy and inauspicious. One should not utter the exclamation *Hun* at sight of a dead body. One should not cross the shadow of the top of a sacred tree or the shadow of one's preceptor, or of a person that is worthy of one's reverence, or of one that is a sinful wretch."

न क्षपास्वमरसदनचैत्यचत्वरचतुष्पथोपवनश्मशानायतनान्यासेवेत। नैकःशून्यगृहं न चाटवीमनुप्रविशेत्। न पापवृत्तान् स्त्रीमित्रभृत्यान् भजेत। नोत्तमैर्विरुध्येत। नावरानुपासीत। न जिह्मं रोचयेत्। नाऽनार्यमाश्रयेत्। न भयमुपपादयेत्। न साहसातिस्वप्नप्रजागरस्नानपानासनान्यासेवेत। नोर्द्ध्वजानुश्चिरं तिष्ठेत्। न व्यालानुपसर्पेत्। न दंष्ट्रिणः न विषाणिनः। पुरोवातातपावश्यायातिप्रवातान् जह्यात्। कलिं नारभेत। नानिभृतोऽग्निमुपासीत। नाविगतक्लमो नाप्लुतवदनो न नग्न उपस्पृशेत्, न स्नानशाट्या स्पृशेदुत्तमाङ्गम्, न केशाग्राण्यभिहन्यात्।

"One should not pass the night in temples of deities, in the shades of sacred trees, in open places laid out for sacrifices, in spots where four roads meet, in groves., in crematoriums, and in places of execution. One should not enter an empty house or a forest alone or unaccompanied by another. One should cast off a sinful wife, a sinful servant, and sinful friends. One should never quarrel with persons that are good

One should never associate with those that are mean. One should never fancy a person of a crooked heart. One should never depend upon a person of low extraction or vile conduct. One should never frighten others. One should not rashly violate the rules that have been laid down with respect to food and other things. One should not indulge in excessive sleep, in excessive wakefulness, in excessive bathing, in excessive drinking, and in excessive eating. One should not stand erect on one's knees for a long time. One should not approach snakes, or animals having fangs and teeth, or animals having horns. One should abandon places exposed to the east wind, as also sunshine and frost and breezy spots. One should not set *Kali* in motion. One should not secrete fire in a house (but should keep it in its usual place). One should not eat the remnants of another's dish. One should not warm anything by holding a fire in such a way as to make its heat go downwards. One should not bathe without having dispelled fatigue by rest or while one's face is still covered with sweat. One should not bathe becoming nude. One should not touch one's head with the cloth one wore while undergoing a bath. One should not pull one's hair by the end."

नोपस्पृश्य ते वाससी विभृयात्। नास्पृष्ट्वा रत्नाज्यपूज्यमङ्गल सुमनसोऽभिनिष्क्रामेत्। न पूज्यमङ्गलान्यपसव्यं गच्छेत्। नेतराण्यनुदक्षिणम्। नारत्नपाणिर्नास्नातो नोपहतवासाः ना जपित्वा। न हुत्वा देवताभ्योऽनिरूप्य पितृभ्यो नादत्त्वा गुरुभ्यो नातिथिभ्यो नोपासितेभ्यो नापुण्यगन्धो नामाली नाप्रक्षालितपाणिपादवदनो नाशुद्धमुखो नोदङ्मुखो न विमना नाभक्ताशिष्टाशुचिक्षुधितपरिचरो न पात्रीष्वमेध्यासु नादेशे नाऽकाले नाकीर्णे नाऽदत्त्वाग्रमग्नये नाप्रोक्षितं प्रोक्षणोदकैर्न मन्त्रैरनभिमन्त्रितम् न कुत्सयन् न प्रतिकूलोपहितमन्नमाददीत॥ न पर्य्युषितमन्यत्र मांसहरितकशुष्कशाकफलभक्ष्येभ्यः। नाशेषभुक् स्यादन्यत्र दधिमधुलवणसक्तु सर्पिर्भ्यः॥

(क्रमशः।)

"One should not, after having taken a bath, wear the clothes one wore while bathing. One should not go out without having (first) touched jewels and gems, clarified butter, some object of reverence, auspicious articles, and flowers. One should not set out ( of one's abode on any mission), keeping objects of reverence and those degarded as auspicious on one's right. One should not set out, keeping objects and articles of an opposite kind, on one's left. Without wearing a jewel or gem on one's arm, without having bathed, without having hanged one's clothes, without having poured libations on the sacred fire, without having (silently) recited one's *mantras*, without having offered the usual gifts to the deities,.without having made offerings to one's deceased ancestors, without having made presents to one's seniors and preceptors, without having made gifts to one's guests and dependants, without bearing flowers and perfumes on one's person, without a garland of flowers round one's neck, without having washed one's hands and feet and face, without having cleansed one's mouth, without avoiding the posture of sitting with face to the north, without being cheerful, and without sending away unattached, refractory, impure, and hungry servitors from his presence, without using plates and cups that are pure and clean, without being seated on a proper place, without selecting the proper time and a spot that is uncrowded, without having cast the first morsel on the fire (as an offering to the deities), without sprinkling the food with sacred water, without dispelling its faults by uttering the proper *mantras*, without avoiding the utterance of everything that looks like depreciating the food to be taken, without assuring himself that the food is not unclean, and that it has not been brought or served by an enemy, one should not sit down to eat. One should not take foot that is stale unless it be meat or green pot-herbs or jute-leaves or fruits or certain kinds of confectionery. One should not eat the whole of the food that is placed before one unless it be curds or honey or salt or the flour of fried barley or ghee."

शकाब्दाः १८१५।

## महात्मस्वर्गीयखेलचन्द्रघोष-पुत्रेण परमधार्म्मिकेन श्रीयुक्त बाबु रमानाथघोषेण समाहूतायां सभायां

# एतद्वर्षीय श्रीश्री৺शारदीयदुर्गापूजा-समयनिर्णयः।

सौराश्विनस्य पञ्चविंशति दिवसे मङ्गलवासरे ९।४३ त्रिचत्वारिंशत्पलाधिकनवमदण्ड-मध्ये इं १०।३।२ सेकेण्ड मध्ये पूर्व्वाह्ने प्रतिपदादिकल्पारम्भः—

सौराश्विनस्य त्रिंशद्दिवसे रविवारे दिवा ६।५९ ऊनषष्टिपलाधिकषष्ठदण्डगते इं ९।११ सेकेण्डगते षष्ठ्यादिकल्पारम्भः सायं षष्ठ्यां बोधनञ्च।

सौराश्विनस्यैकत्रिंशद्दिवसे सोमवासरे सायमामन्त्रणाधिवासौ,—

सौरकार्त्तिकस्य प्रथमदिवसे मङ्गलवासरे दिवा ९।३५ पञ्चत्रिंशत् पलाधिकनव-दण्ड मध्ये इं १०।५ मिनिट मध्ये पूर्व्वाह्ने किन्तु चरलग्नानुरोधात् ३।३५।३२ द्वात्रिंशत् विपलाधिक पञ्चत्रिंशत् पलाधिकदण्डत्रय मध्ये इं ७।३५ मिनिट मध्ये पत्रिकाप्रवेशोदेवी-स्थापनं सप्तमीपूजारम्भश्च।

सौरकार्त्तिकस्य द्वितीयदिवसे बुधवासरे ९।३४ दिवा चतुस्त्रिंशत् पलाधिक नवदण्ड इं १०।१ मिनिट मध्ये पर्व्वाह्ने महाष्टमीपूजा, तत्परे दिवा २०।२१ एकविंशतिपलाधिक विंशतिदण्डगते इं दिवा २।२४ मिनिट गते सन्धिपूजारम्भः दिवा २२।२१ एकविंशति पला-धिक विंशतिदण्ड गते इं २।४८ मिनिट गते बलिदानम्।

सौरकार्त्तिकस्य तृतीयदिवसे बृहस्पतिवासरे दिवा ९।३२ द्वात्रिंशत् पलाधिकनवदण्डा-भ्यन्तरे इं दिवा १०।५ मिनिटमध्ये पूर्व्वाह्ने महानवमीपूजा होमदक्षिणादिकं सर्व्वं समाप्यम्।

सौरकार्त्तिकस्य चतुर्थदिवसे शुक्रवासरे दिवा ७।८ अष्टपलाधिकसप्तदण्डमध्ये इं दिवा ९।८ मिनिट मध्ये पूर्व्वाह्ने किन्तु चरलग्नानुरोधात् दिवा ४।४५ पञ्चचत्वारिंशत् पलाधिक चतुर्थदण्ड मध्ये इं ८।६ मिनिट मध्ये दशमीविहितपूजां समाप्य देवीं विसर्ज्जयेत्।

सौराश्विनस्य त्रिंशद्दिवसे बोधनानुरोधात् कल्पारम्भसङ्कल्पो नास्मद्गुरूणामनुमतः विदेशीय घटिकायन्त्रानुसारेण समयनिर्णयो न शास्त्रानुमोदित इति मन्यते। महामहोपा-ध्याय श्रीचन्द्रकान्तशर्म्मा (तर्कालङ्कारः), सां कलिकाता।

सौराश्विनस्यैकत्रिंशद्दिवसे सोमवारे पूर्व्वाह्ने षष्ठ्यादि कल्पारम्भः सायमधिवासः पूर्व्व-दिने सायं बोधन मात्रमिति नवद्वीपादि प्रदेशस्थपण्डिता मन्यन्ते। श्रीमधुसूदन देवशर्म्मा (स्मृतिरत्नः) सां कलिकाता। श्रीकामाख्यानाथ देवशर्म्मा (तर्कवागीशः), सां कलिकाता। श्रीचन्द्रशेखर शर्म्मा (चूड़ामणिः), सां हातिबागान। श्रीउमेशचन्द्र देवशर्म्मा (शिरोमणिः), सां कलिकाता। श्रीचण्डीचरण शर्म्मा (स्मृतिभूषणः), सां कलिकाता। श्रीदेवेन्द्रनाथ देवशर्म्मा (विद्यारत्नः) सां पाँजिया। श्रीयदुनाथ शर्म्मा (ज्योतिर्व्वित्)। श्रीराजकृष्ण शर्म्मा (तर्करत्नः) सां पूँड़। श्रीयदुनाथशर्म्मा (शिरोमणिः) सां वराहनगर। श्रीआनन्दचन्द्रशर्म्मा (स्मृतितीर्थः)। श्रीकृष्णदास शर्म्मा (वेदान्तवागीशः), सां कालीघाट। श्रीश्रीधरदेव-शर्म्मा (स्मृतितीर्थः)। श्रीकृष्णसुन्दर शर्म्मा (दर्शनशिरोरत्नः) सां कलिकाता। श्रीकाली-नाथ शर्म्मा (ज्योतिर्व्वित्), सां कलिकाता। श्रीद्वारकानाथ शर्म्मा (ज्योतिर्व्वित्) सां कलिकाता। श्रीजयचन्द्र सिद्धान्तभूषणः।

# प्रवेशिकाप्रश्नास्तदुत्तरादर्शाश्च ।

## लाहोर-विश्वविद्यालयस्य ।

ख्रीष्टियाब्द: १८९३ ।

---

*Sanskrit* (*a*).

( दैर्घ्याधिक्यादनुपयुक्ततया च भाषान्तरबहुला: एते प्रश्ना: परित्यक्ता: । )

*Sanskrit* (*b*).

I. Give the Genitive ( षष्ठी ) and locative ( सप्तमी ) Singular, dual & plural of उपकारी शुद्धमति: वसुधा and य: ।

*Answer.*

| | | एकवचने | द्विवचने | बहुवचने |
|---|---|---|---|---|
| उपकारिन् शब्दस्य | षष्ठ्या: | उपकारिण: | उपकारिणो: | उपकारिणाम् |
| | सप्तम्या: | उपकारिणि | उपकारिणो: | उपकारिषु |
| शुद्धमति शब्दस्य | षष्ठ्या: | शुद्धमते: | शुद्धमत्यो: | शुद्धमतीनाम् |
| | सप्तम्या: | शुद्धमतौ | शुद्धमत्यो: | शुद्धमतिषु |
| वसुधा शब्दस्य | षष्ठ्या: | वसुधाया: | वसुधयो: | वसुधानाम् |
| | सप्तम्या: | वसुधायाम् | वसुधयो: | वसुधासु |
| यद् शब्दस्य पुंसि | षष्ठ्या: | यस्य | ययो: | येषाम् |
| | सप्तम्या: | यस्मिन् | ययो: | येषु |

II. Give the third person singular, dual and plural Porasmaipoda 2nd Preterite (लिट्) of स्था, नी, हस् and आप् and the First person singular, dual & plural Porasmaipoda, 2nd Future ( लृट ) of वच् दृश् ग्रास् and पा to (Drink).

*Answer.*

| | | | |
|---|---|---|---|
| स्थाधातोर्लिटि परस्मैपदी प्रथम पुरुषे | एकवचनं तस्थौ | द्विवचनं तस्थतुः | बहुवचनं तस्थुः |
| नी … … | निनाय | निन्यतुः | निन्युः |
| हस् … … | जहास | जहसतुः | जहसुः |
| आप् … … | आप | आपतुः | आपुः |
| वच्धातो र्लृटि परस्मैपदी उत्तम पुरुषे | वक्ष्यामि | वक्ष्यावः | वक्ष्यामः |
| दृश् … … | द्रक्ष्यामि | द्रक्ष्यावः | द्रक्ष्यामः |
| शास् … … | शासिष्यामि | शासिष्यावः | शासिष्यामः |
| पा … … | पास्यामि | पास्यावः | पास्यामः |

III. Form sentences from दुह् याच् and चि governing two accusatives; and change the following from active into passive voice:—रामो नारदं तपोऽकारयत्।

*Answer.*

| | | | | |
|---|---|---|---|---|
| दुहेर्द्विकर्म्मकत्वोदाहरणं | गोपो | गां | दुग्धं | दोग्धि |
| याचेः … … | परमेशं | करुणां | याचते | धार्म्मिकः |
| चिञः … … | लतिकां | कुसुमं | चिनोति | बाला |

रामेण नारदः तपोऽकार्य्यत इत्येव कर्म्मवाच्यवाक्यं स्यात्। अत्र प्रयोज्यकर्त्तरि कर्म्मसंज्ञासीदत एव "कर्म्मसंज्ञायां प्रयोज्य कर्म्मणोः प्रथमा द्वितीये" इति सूत्रेण नारदे प्रथमा तपसि च द्वितीया विभक्तिः।

(क्रमशः।)

(अनावश्यकतया तुरीयः प्रश्नः नोद्धृतः।)

---

अग्रिमदेयं वार्षिकं मूल्यमेकरूप्यकम् (१)। तदनग्रग्राहकैः सार्द्धैकरूप्यकम् (१॥०)।
प्रथम खण्डस्य] १८१५ शाककार्त्तिकमासस्य [सप्तमसंख्या।

# संस्कृतचन्द्रिका।

## मासिकपत्रिका।

दोषचतस्त्वाल हि शोषणीयं, दयारसं साधु सदाभिषिच्य।
सतां पदे तत् प्रचते न धूर्त्तं, किं मक्षिका तत्त्रजति सुताङ्गी॥

श्रीजयचन्द्रशर्म्म-सिद्धान्तभूषण-भट्टाचार्य्येण
सम्पादिता।

विषयाः पत्राङ्कम्।



## कलिकाताराजधान्यां

आहीरीटोला वावुरामघोषलेनस्थ ९ संख्यकभवनात्
श्रीहरिदासमित्रेण प्रकाशिता।
६९ नं गन्‌फाउण्डारि रोड, काशीपुर हर्टिकलचार प्रेसे
श्रीभवतारण चट्टोपाध्यायेन च मुद्रिता।

संवत् १९५०।

# क्षमाप्रार्थना ।

शारदीयपूजया मुद्रायन्त्रस्य विविधप्रत्यूहेन च अनिच्छयापि पत्रिकाप्रकाशे समयव्यत्ययो जातः। तदर्थं ग्राहकानां पत्रेण च नितरां दूये, अतो दुःखितो लज्जितश्च। दोषोऽयं कृपया सोढव्य इति।

वशंवदः

श्रीहरिदास मित्रः।

---

# शुद्धिपत्रम्।

## श्रावणमासस्य।

| अशुद्धम्। | शुद्धम्। | पृष्ठाङ्कम्। |
|---|---|---|
| वपुरपायि | वपुरस्थायि। | |
| नगनन्दिनी | नगेन्द्रनन्दिनी। | ७३ |

## भाद्रमासस्य।

| | | |
|---|---|---|
| उत्तम | उत्कृष्ट। | ९७ |

---

# साहाय्यदाता।

श्रीयुक्त बाबु आशुतोष प्रामाणिकः ... ... ... १०

---

श्रीश्रीदुर्गा

शरणम्।

# संस्कृतचन्द्रिका।

(१८१५ शाक कार्त्तिकमासस्य।)

श्रीश्रीगणेशाय नमः।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव।
मायावलम्बते सेयमम्बा श्रीशिवसुन्दरी॥

## उद्भट-श्लोकाः।

"कृष्णः करोतु कल्याणं कंसकुञ्जरकेशरी।
कालिन्दीजलकल्लोल-कोलाहल कुतूहली॥ ३५॥

"अगजानन पद्मार्कं गजाननमपापदम्।
अनेकदन्तं भक्तानामेकदन्तमुपास्महे॥ ३६॥ *

"सञ्चारी रतिमन्दिरावधि पदन्यासावधि प्रेक्षितम्,
हास्यञ्चाधरपल्लवावधि सखीकर्णावधि व्याहृतम्।
चेतः कान्तसमीहितावधि महामानोऽपि मौनावधिः।
सर्व्वं सावधि नावधिः कुलभुवां प्रेम्नः परं केवलम्॥ ३७॥

"अङ्कं केऽपि च शङ्किरे जलनिधेः पङ्कं परे मेनिरे,
सारङ्गं कतिचिज्जना जगदिरे भूच्छाय मैच्छन् परे।
इन्दौ यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते,
तन्नूनं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे॥ ३८॥"

"जगद्विलक्षणेक्षणे! मदीयकं वरानने! कदम्बकोरकद्वयं न गोपि! गोपितं कुरु।
इदं निगद्य राधिका-पयोधराम्बरं हरन्, कलिन्दनन्दिनीतटे ननन्द नन्दनन्दनः॥३९॥"

"कार्त्तिकस्य दिनान्यष्टावष्टौ मार्गशिरस्य च, यमस्य दशना एते वह्नाहारी न जीवति॥४०॥

"चैत्रे मासि गुड़ाहारा वह्नाहाराश्च कार्त्तिके, पौषे मासि निराहारा भवन्तु तव शत्रवः॥४१॥

---

* अगजायाः पार्व्वत्याः आननपद्मस्य अर्कमिव प्रसादकम्। भक्तानामनेकदं वहर्थ-दातारम्। तं प्रसिद्धम्।

# संस्कृतभाषाधीजिगमिषा।

"जननी जन्मभूमिश्च स्वर्गादपि गरीयसी।"

प्राणैरपि पणैः स्वदेशस्योपकारः कर्त्तव्यः सर्व्वेषाम्। सम्प्रति पृथिवीस्थसकलसभ्यदेशेष्वेव एकान्ततत्परा वर्त्तन्ते स्वदेशस्य हितसाधने शिक्षितजनगणाः। यथा च स्वदेशस्य सम्मानं गौरवञ्च वर्द्धेत तथा प्रत्येकं व्यक्तयः सम्यक् यतन्ते। अनेके च देशहिताय श्रमोपार्ज्जितानि वहूनि च धनान्यकातरं वितरन्ति। अनेके च विद्यन्ते ईदृशा महात्मानः ये खलु समुन्नतिसाधनं स्वदेशस्य यावदावश्यकं मन्यन्ते, स्त्रीपुत्त्रादीनां भरणं ततो नाधिकं विवेचयन्ति। यस्मिंश्च देशे समधिका संख्या तथाविधानां सत्पुरुषाणाम्, स एव देशो विद्यया धिया विभवेन सम्मानेन च समधिकश्रेष्ठो गौरवितश्च स्यात्। लण्डनदेशवासिनः आमेरिकावासिनश्च सम्प्रति पृथिव्यामप्रतिहतं प्रभुत्वं विस्तारयन्तीति दृश्यते। एते हि देशाः प्रायः शतवर्षात् पूर्व्वं वहुषु विषयेषु अपूर्णवीर्य्या आसन्। देशीयानां देशहितैषिणी वृत्तिर्यावत् वर्द्धेत तावत्ते देशवासिनः प्राणपणैरपि स्वदेशोन्नतौ प्रवर्त्तितु मर्हन्ति स्म। येषां यावती शक्तिः ते तावतीं चेष्टामकुर्व्वन्। तादृशसमवेतानां चेष्टयैव सभ्यतायाश्चरमसीम्नि ते देशाः समुन्नीता आसन्।

किन्तु वर्त्तमानसमये वर्षेऽस्मिन् भारते सर्व्वं विपर्य्यस्तम्। इदानीन्तु भारते पूर्व्वभावः कियानपि नास्ति। नास्ति पूर्व्वकीर्त्तिः पूर्व्वगौरवञ्च। फलतोऽपि दासत्वं विना नास्त्यन्यत् किञ्चिदपि भारतीयानाम्। अहह यस्य भारतस्य प्रतापैःससागरा सभूधरा धरा चकम्पे। यस्य च भारतस्य ज्ञानेन सकलदेशो ज्ञानी वभूव, या हि भारतभूमिर्विद्यायाः सभ्यतायाः असङ्ख्यशास्त्राणामपि

प्रसूतिरासीत्। सैव भारतभूमिरधुना दासत्वपाशैर्बद्धा दीना भिक्षान्नजीविकेव परमुखं प्रेक्षते। चिरपराधीनभारतवासिनां विद्या बुद्धिर्म्मानसिकतेजस्विता च समूलं ध्वस्ता।

परन्तु भारतेऽस्मिन् संस्कृतभाषैव प्राचीना, प्रकृतिप्रत्ययादि-विभागेन व्याकरणशास्त्रैः संस्क्रियमानत्वादेव भाषैषा संस्कृतपदेन भूषिता। ईदृशी सर्व्वाङ्गसुन्दरी भाषा नास्त्यपरा। एषैव देवभाषा, पुरा भारतीया नृपतयः प्रायेण ब्राह्मणान् प्रतिपालयाञ्चक्रुः, सुतरां नान्नाय न वस्त्राय च कापि चिन्ता नासीत् तेषाम्। ते हि केवलं शास्त्रालोचनया देशहितकरे च कर्म्मणि दीर्घजीवनमतिवाहयन्ति स्म। अहो स च कालश्चिराय गतः पुनर्न प्रतिनिवर्त्तिष्यते। कदाचित् संस्कृतभाषा भारतीयकीर्त्तिस्तम्भीवभूव। किन्तु संप्रति तत्र भाषायां यूरोपीयाः जार्म्मनदेशीयाश्च यथा समुत्सहन्ते यतन्ते च, भारते तच्चतुर्थांशोऽपि न लक्ष्यते। ये तु कतिपये पण्डिताः कियतीं शिक्षां लभमाना अपि घोरतमसाच्छन्ना विषीदन्ति।

अतः हे भारतवासिनः! हे विद्यार्थिनः! हे ज्ञानलिप्सवः! विना हि जलसेकात् लतिका किं वर्द्धेत? विना हि तैलार्पणात् प्रदीपः किं दीप्येत? तथा विना पर्य्यालोचनया संस्कृतभाषापि न स्फुरेदिति सत्यम्, किन्त्विदं दुःखमेकं हृदि सदा जागर्त्ति, यत् वय-मष्टमाद्वर्षादारभ्य अद्यपर्य्यन्तमधीत्यापि संस्कृतम् निरन्तरं निम-ज्जन्तोऽपि संस्कृतभाषाराशौ तां वक्तुं न शक्नुमः, नैतत् किं दुःख-कारणम्?। अहो ये पुनरप्राप्तवयस्का अपि बालकाः प्रविशन्त इंरेजिविद्यालये अनल्पेनैव दिनेन श्रुतिकटुं रसनाप्रतिघातिनीं इंरेजिभाषां "टां टिं" इत्युच्चार्य्य विलक्षणमालपन्ति। किन्तु अस्माकं मातृभाषान्तर्गतापि "जल फल पुष्प" इत्यादिसंस्कृतभाषा वर्त्तते, तथापि वयं संस्कृतं वक्तुं न शक्नुमः नैतत् किं दुःखम्?।

ये तु जर्म्मनदेशवासिनः कदाचिदपि स्वप्नेऽपि यां भाषां

नालोचयन्ति स्म, तद्इदानीं मातृभाषामिव प्रायः सर्व्वे तां भाषां नित्यं व्यवहरन्ति। नैतत् किमाश्चर्य्यकरम्?। केचिदयं चिरमधीत्य तर्कपञ्चाननेति तर्ककेशरीति च व्याधिमिवोपाधिं लब्ध्वा पण्डितम्मन्या भवामः, किन्तु यदि कदाचित् केचिदस्मान् संस्कृतं वक्तुमादिशन्ति, तदा शिरः कण्डूयित्वा कण्डूयित्वा मृदु मृदु अतिशिष्टा इव एवं ब्रूमः हे महाशय! वयं संस्कृतं शास्त्रं जानीमः, किन्तु वक्तुं न जानीमः, संस्कृतभाषा न सहजा, संस्कृतं वक्तुं पृथगेव शक्तिरपेक्ष्यते इत्यादि वाक्येन तान् प्रतारयामः। नैतत् किं दुःखकारणम्?।

अतः हे भारततनयाः! हे विद्यार्थिनः! केन नाम गुणेन वयं गौरविता भवामः?, अस्माकं मानः धनं कुलञ्च सर्व्वं रसातलं गतम्, तथाहि, सम्प्रति केवलं यथेच्छाचरणाय जातिभेदमस्वी कुर्व्वद्भिः कपटब्राह्मैः धनलोभाय अयाज्ययाजकैः धर्म्मशास्त्रमपलपद्भि र्यथेष्टाचारैरन्त्यजादिजलान्नभोजिभिः भूतलं रसातलं नयद्भिश्च अस्माभिः पण्डितैः वल्लालसेनानुमोदितां पद्धतिं देशव्यवहारञ्च वेदानुशासनमिव स्वीकुर्व्वतां नाम्नैव कुलीनानां वङ्गीयानां कन्याभिः एवं कन्दर्पदर्पितैर्यवनराजैश्च पूर्व्वं कुलं कलुषीकृतम्। धनमपि कण्ठतो वक्तुमशक्येन केनापि कारणेन क्रमशो क्षियते। एवं यवनराजत्वावधि सर्व्वेषां नाशावशिष्टा छिन्नभिन्ना ज्वरत्कलेवरा ज्वलदनलसन्तापतप्तमलिनकदलीदलतुल्या जीर्णशीर्णा च या संस्कृतभाषा आसीत् साप्यस्माकमश्रद्धया अधो जिगमिषति।

अहह या हि संस्कृतभाषा वेदानां सर्व्वस्वम्, सा सम्प्रति अस्माभि रवमाननादिव भारतवर्षं त्यक्तुकामा। हे विद्यार्थिनः! हे सखायः! या हि संस्कृतभाषा देवैरपि सेविता राजभिरपि सम्मानिता सा संप्रति अनाथा दुःखिनीव भारतभूमिं त्यक्तुमुद्यता, अतो यूयं सर्व्वे जाग्रत जाग्रत, द्रुतमागच्छत, संस्कृतभाषा अस्माकं किमपराध्यते?

यतस्तां वहिष्कर्त्तुं देशादस्मादयमुद्यताः संस्कृतभाषास्मान् किमपकरोति? अत आलस्यं जहित, नेदानीं निद्रा समुचिता। अहह हे संस्कृतप्रियाः! या हि संस्कृतभाषा कवीनां सर्व्वस्वम्, कण्ठाभरणञ्च सा संप्रति अस्माभिरवमाननादिव देशमिमं त्यक्तुकामा। अतः सर्व्वे मिलित्वा आगच्छत, निद्रां जहित, नयनमुन्मीलयत, नायं निद्रासमयः। अहह या हि संस्कृतभाषा हरिहरविरिञ्चिवाल्मीकिव्यासानां रसनासनकारिणी, या हि संस्कृतभाषा कविचूड़ामणिकालिदासस्य मानसहंसी, या हि संकृतभाषा ब्रह्मविष्णुशङ्करादिभिर्व्व्यासवशिष्टादिभिश्च सह लिपिसुखेन साक्षात् कारयितुं संलापयितुं स्वर्गीयं सुखमनुभावयितुञ्च समर्था, तां भाषामद्य भारतसन्तानेष्वस्मासु जीवितेषु कति कति गिरिवरसागरपारात् देशादिंलण्डात् समागत्य इंरेजिभाषा निर्जित्य च, आक्रम्य च समग्रभारतं प्रायशः प्रतिगृहं वहिर्व्वाटीमतिक्रम्य कोणं यावदन्तःपुरप्रधानगृहस्य प्रविष्टा, कृतपदा च संप्रोञ्छ्य (१) ताम्बूलरागं सह कलञ्जपत्रभस्मना (२) कामिनीनामोष्ठे। अतोऽपमानादिव तस्मात् सा संस्कृतभाषा देशमस्मांश्च परिहर्त्तुकामा। अतो विलम्बं मा कुरुत, सर्व्वे सम्भूय समागच्छत, वद्धपरिकरा भवत, प्राणपणैरपि तां संस्कृतभाषां रक्षिष्यामः, अधःपतनोन्मुखिनीं तां समुद्धरिष्यामः। हे विद्यार्थिनः! यदि संस्कृते स्नेहो वर्त्तते तदा अधुनापि समयो विद्यते, अधुनापि शरीरे प्राणास्तिष्ठन्ति, अधुनापि धमनी रक्तं वहति स्पन्दते च, अधुनापि व्याधिभिः सर्व्वेन्द्रियाणि नाक्रान्तानि, वलं न लीनम्, वुद्धि र्नध्वस्ता, शरीरं न जीर्णम्, आयुर्न क्षीणम्, अतोऽयमेव रक्षासमयः संस्कृतभाषायाः, अतःपरं समयो न स्थास्यति, कालविप्लवात् चतुष्पाठीषु विकृतशिक्षासु संस्कृतभाषापत्रिकैव अन्यतमः सम्यगुपायः, अतस्तां प्रति यतध्वम्, धनो-

(१) दूरीकृत्य। (२) ताम्रकूटपत्रभस्मना।

पार्ज्जनन्तु नास्याः पत्रिकायाः उद्देश्यम्, तत्तु सुधीभिर्भाव्यम्। अस्माभि र्यद्वक्तव्यन्तदुक्तम्, अधुना श्रीमतां सुधियां विद्यार्थिनां यथेच्छं विधेयम्, किमधिकेनोन्मत्तवज्जल्पितेन इति।

---

# महाप्रभुश्रीगौराङ्गदेवस्य जीवनचरितम्।

(पूर्व्वप्रकाशितात् परम्।)

सप्ताधिक चतुःशतशकाब्देष्वतीतेषु फाल्गुणे मासि कुम्भराशिस्थे भास्करे पौर्णमास्यां तिथौ निशामुखे सिंहलग्ने श्रीगौराङ्गः समजनि। तस्मिन्नेव मुहूर्त्ते अकलङ्कगौरचन्द्रस्याविर्भावे सकलङ्केण चन्द्रेण किमिति विचिन्त्य छायासुतश्चन्द्रमग्रसिष्ट। यद्वा ग्रहणमुपलक्ष्यीकृत्य हरिध्वनिमिषेण श्रीगौराङ्गस्यावतारं तदुद्देश्यञ्च घोषयितुं विधात्रैवेदं चन्द्रग्रहणमुदपादि। प्रकृते तु तस्याविर्भावसमये नवद्वीपनगरे दिगन्तागतगङ्गास्नानार्थिनां सर्व्वतोदिशं तुमुलो हरिध्वनिरश्रूयत।

श्रीगौराङ्गस्याविर्भावसमये भारतवर्षं विशेषतोऽयं गौड़प्रदेशः अवैष्णवप्रायमासीत्। कमलाक्षमिश्रनामकः कश्चित् शान्तिपुरनिवासी विविधविद्यापारदर्शी वारेन्द्रब्राह्मणः नवद्वीपे स्थित्वा शिष्यानध्यापयामास। स तु प्रथमे वयसि अद्वैतचर्च्चयाद्वैतवादीति विख्यातो बभूव। पश्चान्माधवेन्द्रपुरिनामकेन केनचिद्भगवद्भक्तेन कृतदीक्षः भक्तिशास्त्रेषु सुपण्डितो जातः। ततः प्रभृति वैष्णवाः नानास्थानादागत्य तस्मात् कमलाक्षमिश्रवैष्णवादेव भक्तिशास्त्राण्यध्येतुमारेभिरे। स तु शिष्यान् अध्याप्य कतिपयैरन्तरङ्गवैष्णवैर्भगवद्भजनेन भगवत्कथाप्रसङ्गादिना चावसरं नयन् तस्थौ। नवद्वीपनगरे वैष्णवा मुष्टिमेया अवैष्णवा बहवः प्रभाववन्तश्च, ते हि

सदैवाद्वैतप्रमुखान् वैष्णवान् वैष्णवधर्म्मं विष्णुञ्च निन्दन्ति। वैष्णवास्तु स्वसम्प्रदायं हीनबलं ज्ञात्वा दुःखेनैव कालं नयन्ति। अद्वैताचार्य्यः अचिरेणैव भगवान् वैष्णवानां चित्तविषादमपनेष्यतीत्याशाप्रदानेन तान् कथञ्चित् आनन्दयन्ति। एतस्मिन्नन्तरे तार्किकाणां तर्कतरङ्गहस्तैरभ्यर्थित इव विद्यानुशीलनस्य परमपुरुषार्थ इव निरीश्वराणामीश्वरविश्वास इव अज्ञानान्धकारावृतानां ज्ञानदीप इव हीनबलवैष्णवसम्प्रदायस्य रक्षकः त्रितापसन्तप्तमानवानां शान्तिदाता श्रीगौरचन्द्रः शचीगर्भसिन्धोर्नवद्वीपाकाशे समुदितः। ये तु तदाविर्भावमालोकयितुं दिगन्तरादागतवन्तः ते हि सफलमनोरथा अभवन्।

श्रीगौरचन्द्रः पित्रोः स्वजनानां नवद्वीपनिवासिनां च हर्षेण सह पञ्चतिथशशीवानुदिनं विवर्द्धमानः क्वचित् बालस्वभावसुलभेन रोदनेन क्वचित् उद्गीयमानसमागतजनोच्चारितहरिनामश्रवणक्षणजातहास्यादिना क्वचित् करचरणसञ्चालनादिना क्वचिदावर्त्तनादिना क्वचित् रिङ्गणेन क्वचिदुत्थानेन क्वचित् पतनेन क्वचित् पादचारणेन क्वचित् सारमेयशावकग्रहणेन क्वचित् प्रतिवेशिदत्ततालानुसारिनृत्येन क्वचित् वयस्यैः सह सुरसरित्तीरस्थसिकतामयप्रदेशविहारेण क्वचिदशुचिस्पर्शादिबालचापल्येन क्वचिच्चोरहस्ताद्विमुक्तिलाभेन क्वचित् कस्यचिन्नैवेद्यभक्षणेन क्वचित् कस्यचिदुपहासच्छलेन मुखभङ्ग्यादिना च पञ्च वर्षाणि निनाय। स तु आद्ये वयसि चापल्येन सर्व्वानेव वयस्यानतिक्रान्तवान्। पुत्रवत्सला शचीदेवी तत्प्रतिकाराय प्रतिवेशिगृहिणीभिरुपदिष्टा षष्ठ्यादिपूजनं कृतवती। बालकस्तु यथापूर्व्वमासीत् न तस्य चापल्यमल्पमपि उपशमं लेभे। एतावानेव श्रीगौराङ्गस्य कौमारवृत्तान्तः। स यदा कौमारमतीत्य पौगण्डं प्राप्तवान् तदा तस्य ज्येष्ठसहोदरो विश्वरूपः निर्व्विद्य गृहं तत्याज। विश्वरूपः षोड़शवर्षे अकृतदार एव

लोकनाथनाम्ना केनचित् सहाध्यायिना सह सन्यासाश्रमं भेजे। गृहत्यागात् परं वर्षद्वयं यावत् न तस्य कश्चिदपि संवादः अश्रूयत। स तु अष्टादशवर्षे मुम्बयीप्रदेशस्थपुनासमीपवर्त्ति पाण्डुपुरनगरे श्रीनित्यानन्दावधूतस्य श्रीविग्रहे विलीनो बभूव इत्यादि जनश्रुतिः।

श्रीगौराङ्गश्च बालचापल्येन कौमारं नीत्वा पौगण्डे पित्रोर्विश्वरूपविरहजन्यशोकापनयनायैव स्थैर्य्यं दधार। तत एव अध्ययने निविष्टचित्तः जनन्या जनकस्य च मुदमाततान। विश्वरूपसन्यासात् पितरि तस्यशिक्षायामिच्छारहितेऽपि न स कदाचित् पाठं जहौ। प्रतिदिनमनन्येन मनसा अध्ययने निरत आसीत्।

एवं गच्छता कालेन श्रीगौराङ्गः उपनयनोचिते वयसि समाजगाम। तदा मिश्रवरः श्रीविष्णुपण्डितः श्रीसुदर्शनप्रभृतिभिः पण्डितैस्तस्य उपनयनसंस्कारं सम्पादितवान्। स्वभावसुन्दरः श्रीगौराङ्गचन्द्रः ब्रह्मचारिवेशेन समधिकशोभाशाली बभूव। तस्य अलौकिकब्रह्मतेजसा सर्व्वे जना विमोहिताः सन्तस्तं अमानवं पुरुषं मेनिरे। श्रीगौराङ्गः व्याकरणाध्ययनेन कैशोरं कालं नयन्नास्ते। तत्पिता श्रीजगन्नाथमिश्रवरः इहलोकमत्यजत्।

शचीदेवी पितृहीनं श्रीगौराङ्गमध्ययनार्थं वैयाकरणकेशरिणः गङ्गादासपण्डितस्य हस्ते समर्पितवती। असाधारणप्रतिभासम्पन्नः श्रीगौराङ्गः अचिरेणैव व्याकरणव्युत्पत्तिं लब्ध्वा कमलाकान्तकृष्णानन्द-मुरारिगुप्तादीन् गङ्गादासशिष्यान् विजित्य न्यायशास्त्रानुशीलनार्थं वासुदेवसार्व्वभौमस्य शिष्यत्वं स्वीचकार। तत्र च रघुनाथेन सह न्यायशास्त्राध्ययनमारेभे। अनतिदीर्घेणैव कालेन न्यायशास्त्रेऽपि सम्यक् व्युत्पत्तिमगमत्। अध्ययनावस्थायामेव तस्मिन् शास्त्रे जनानां प्रवेशार्थं अभूतपूर्व्वां टीकामेकां प्रणिनाय। तत् सहाध्यायी रघुनाथशिरोमणिरपि तत्समकालमेव लोकप्रसिद्धां दीधितिटीकां व्यरचयत्, दीधितिप्रणयनसमये तत्प्रणेतृरघुनाथ

शिरोमणेर्मनसि इयमेवाशा जाता यत् तस्य टीकैव लोके प्रथिता भविष्यति। परन्तु दैवगत्या श्रीगौराङ्गरचितग्रन्थस्य गौरवेणातिविस्मितः क्षुब्धचित्तस्य स वभूव। एकदा श्रीगौराङ्गमपि निजमानसव्यथां विज्ञापयामास। उदारचेता श्रीगौराङ्गस्तु तच्छ्रुत्वा सहाध्यायिनं गतव्यथं विधातुं तस्यैव पुरतः स्वरचितं न्यायग्रन्थं गङ्गासलिले विससर्ज्ज। न्यायशास्त्रे तस्याप्रतिद्वन्द्वि यशः प्रख्यापयितुं न्यायाध्ययनमपि परित्यक्तवान्। स्वार्थत्यागस्यायमेव अतुग्ज्ज्वलो दृष्टान्तः। अस्मादेव दिनात् श्रीगौराङ्गस्य प्रेम्णा जगद्वशीकारः प्रवृत्तः। स तु प्रतिष्ठाकामं सहाध्यायिनं पूर्णमनोरथं विधाय स्वयं मुकुन्दसञ्ज्ञयाभिधेयस्य कस्यचित् धनाढ्यब्राह्मणस्यालये शिष्यानध्यापयितुम् आरब्धवान्, षोड़शवर्षे अध्यापनाकार्य्ये प्रवृत्तः न कोऽपि कदापि श्रीगौराङ्गेण समं प्रथितयशा आसीत्। तद्यशसा समाकृष्टाः सन्तः देशाद्देशान्तरात् वहवः पाठार्थिनः समागत्य श्रीगौरांगस्य चरणं शरणमीयुः। श्रीगौराङ्गः अचिरेणैव कालेन प्रधानेषु पण्डितेषु गणनीयो वभूव।

अथैकदा वनमालीति नाम्ना विख्यातः कश्चिद् विप्रो घटकः शचीदेव्याः समीपमागत्याह देवि! वल्लभाचार्य्यस्य एका सर्व्वलक्षणसम्पन्ना सर्व्वांगसुन्दरी कन्या आस्ते। सा तु तव पुत्रस्य योग्या वधूर्भविष्यति। यदि भवत्यै रोचते तदा तत्पिता तवपुत्राय तां लक्ष्मीदेवीं कन्यामर्पयित्वात्मानं कृतार्थं मंस्यते। शचीदेवी तत्प्रस्तावं साधु मेने। श्रीगौराङ्गस्तदाज्ञया तां कन्यां परिणीतवान्। महता उत्सवेन उद्वाहव्यापारः समाहितः। श्रीगौरांगः लक्ष्मीदेवीमुद्वाह्य गार्हस्थ्यमकरोत्।

एतस्मिन्नन्तरे ईश्वरपुरीनामधेयो भक्तप्रवरः सिद्धसन्यासी नवद्वीपमाजगाम। स तु अद्वैतगुरोर्माधवेन्द्रस्य शिष्यः आसीत्। एकदा पथि गच्छन् श्रीगौरांगः तमवलोक्य भक्त्या ननाम। ईश्वर

पुरी पूर्व्वमेव श्रीगौरांगस्य पाण्डित्यगौरवं श्रुतवान्। सम्प्रति प्रणमन्तं तमेव श्रीगौरांगपण्डितं ज्ञात्वा तस्य अमानुषलक्षणावलोकनेन च तं पुनर्म्महापुरुषं मत्वा च विस्मयापन्नः कोऽयं महान् इति चिन्ताकुलश्च बभूव। श्रीगौरांगस्तु तं स्वगृहे भिक्षाग्रहणार्थमभ्यर्थयामास। ईश्वरपुरी यन्त्रपुत्तलिकेव स्वमानसानुकूलं तदाह्वानं साधु मेने।

प्रस्थिते च तस्मिन् श्रीगौरांगस्य प्रकृतेः परिवर्त्तनम् अदृश्यत। ततः प्रभृति श्रीगौरांगः विह्वलितात्मा सन् क्वचित् हसति क्वचित् रोदिति क्वचित् नृत्यति क्वचिदुद्गायति स्म। कदाचित् मूर्च्छितः सन् मृतवत् वर्त्तते स्म। सर्व्वे जनास्तं वायुरोगग्रस्तं ज्ञात्वा शचीदेव्या दुःखेन दुःखिता बभूवुः। तत्प्रशमनाय विष्णुतैलादिव्यवहारव्यवस्थापि अभूदेव। श्रीगौरांगोऽपि कियता कालेन रोगमुक्तोऽलक्ष्यत। रोगवृत्तान्तोऽयं तस्य यौवनारम्भकालीनः।

जनन्या महता प्रयत्नेन लब्धोपशान्तिः श्रीगौरांगः स्वपूर्व्वेषां महात्मनां निवासस्थानं पूर्व्ववंगं प्रयातुं मनश्चक्रे। तच्च मानसं जनन्यै निवेदयामास। पुत्रविरहकातरा शचीदेवी असतप्रामपीच्छायां पुत्रस्यातीवाग्रहदर्शनेन तद्गमनमनुमोदितवती। श्रीगौरांगः परिणीतां लक्ष्मीदेवीं जननीञ्च तद्विरहाम्बुधौ निक्षिप्य शिष्यैः सह पूर्व्वबंगं जगाम। श्रीगौरांगः पूर्व्ववंगे कतिपयान् मासान् एव अवात्सीत्। तस्य तन्मात्रेणाल्पकालव्यापिना विहारेण तत्प्रदेशवासिनां हृदये भगवद्भक्तिसञ्चारणं तस्यामलौकिकशक्तिसमन्वितत्वं प्रकाशयति। स यदा वंगदेशे भगवद्भक्तिं प्रचारयन् विजहार। तदा नवद्वीपे साक्षात् लक्ष्मीरूपा लक्ष्मीदेवी कालसर्परूपिणा तद्विरहेण दष्टा तद्विषेण जर्ज्जरिता च लौकिकलीलां समवृणोत्। श्रीगौरांगः गृहमागत्य तद्विवरणं निशम्य वधूविरहकातरां जननीं सान्त्वयामास। ततश्च पूर्व्ववत् शिष्याणामध्यापनायां निरतश्च बभूव।

पुनरप्येवमध्यापनप्रवृत्ते श्रीगौराङ्गचन्द्रे केशवपण्डितनामा काश्मीरदेशीयः कश्चिद् दिग्विजयी स्वपाण्डित्यं प्रथयितुं नवद्वीपमाजगाम। स तु विद्यावलेन समग्रभारतविजयी आसीत्। तत्काले नवद्वीपे रघुनाथशिरोमणिप्रभृतिभिर्महामहोपाध्यायैः समलङ्कृतेऽपि न कोऽपि दिग्विजयिना केशवपण्डितेन सह विचारं कर्त्तुम् साहसमकरोत्। दिग्विजयी च सुतरामेवात्मानं नवद्वीपविजयिनं स्थिरीकृतत्र स्वदेशगमनाय कृतमतिर्बभूव। एतस्मिन्नन्तरे एकदा सायंसमये श्रीगौराङ्गः शिष्यमण्डलीपरिवृतः सुरधुनीतीरे विविधशास्त्रालापेन सुखमास्ते। दिग्विजयी स्वगणैः सह यदृच्छयाटन् तत्रोपनीतः। स तु दूरादेव श्रीगौराङ्गचन्द्रस्य परिचयं प्राप्य तत् समीपमागतः। आगम्य च सशिष्येण श्रीगौराङ्गचन्द्रेणाभ्यर्थितः। तन्तु वालकं दृष्ट्वा सगर्व्वमुवाच। भोः व्याकरणाध्यापक! श्रुतं मया त्वं वैयाकरणचूड़ामणिः वयसि नवीनोऽपि शास्त्रे प्रवीण इति। तच्छ्रुत्वा श्रीगौराङ्ग आह। दिग्विजयिन् पण्डितप्रवर! सत्यं मया व्याकरणमधीतमध्याप्यते च परन्तु तत्राज्ञोऽहम्। त्वन्तु महामहोपाध्यायः। तवागमनेन एव वयं कृतार्था जाताः। सम्प्रति स्वरचितगङ्गास्तवेन वालानस्मान् पवित्रान् करिष्यति भवानिति कामयामहे। एतन्निशम्य स तु दिग्विजयी परमसन्तुष्टः सन् तत्क्षणमेव विरचय्य कांश्चित् गङ्गामाहात्म्यसूचकान् स्वपाण्डित्यनिदर्शनरूपान् श्लोकान् पपाठ। तच्छ्रवणेन श्रीगौराङ्गस्य शिष्याः सर्व्वे युगपद्विस्मिता भीताश्च अभूवन्। श्रीगौराङ्गस्तु न तादृग्विस्मितः भीतो वा बभूव। स तु दिग्विजयिनं यथेष्टं प्रशस्य आह। भवत्सदृशः कविरिह जगति सुदुर्लभः। अमानुषीयं भवतः कवित्वशक्तिः। अधुनास्माकं सविनयनिवेदनम्, भवत्पठितानां श्लोकानामेकतमस्य दोषगुणान् विचार्य्य मोदयत्वस्मानिति। इत्युक्तवति श्रीगौराङ्गे दिग्विजयी प्राह कतमः श्लोकोऽत्र व्याख्यास्यते तत् कथय। श्रीगौराङ्गोऽवदत्।

"महत्त्वं गङ्गायाः सततमिदमाभाति नितराम्
यदेषा श्रीविष्णोश्चरणकमलोत्पत्तिसुभगा।
द्वितीयश्रीलक्ष्मीरिव सुरनरैरर्च्यचरणा
भवानीभर्त्तुर्या शिरसि विभवत्यद्भुतगुणा॥"

अस्य तव श्लोकस्य व्याख्यानं श्रोतुमिच्छामि! तच्छ्रुत्वातीव-विस्मयापन्नः दिग्विजयी प्राह त्वं श्रुतधरोऽसीति मन्ये। कथमन्यथा श्रवणमात्रेणैवायं श्लोकोऽधिगतस्त्वया। श्रीगौराङ्ग आह वाग्देव्याः कृपया यथा कश्चित् कवित्वशक्तिसम्पन्नो भवितुं शक्नोति तथा केनचित् श्रुतधरेणापि भवितुं शक्यते नैतच्चित्रम्। तदाकर्ण्य दिग्विजयी श्रीगौराङ्गं श्रुतिधरं विभाव्य हृष्टः सन् स्वरचितश्लोकस्यानुपमानुप्रासाद्यलङ्कारान् दर्शयामास। दिग्विजयिनि तथानुष्ठाय विरते श्रीगौराङ्ग उवाच पण्डितवर! श्लोकस्या गुणाः काश्चित् श्राविताः, दोषाश्चेत् सन्ति तानपि श्रोतुमिच्छामः, श्रावयतु भवान्। तच्छ्रुत्वा प्रतिष्ठाकामः दिग्विजयी रोषारुणितनेत्रः प्राह, भोः व्याकरणाध्यापक! न सन्त्यत्र दोषाः। स्थितिष्वपि वैयाकरणानां भवतां तद्वेदनसम्भावनां नालोकयामः। श्रीगौराङ्ग उवाच सत्यमस्माभिरलङ्कारो न पठितः परन्तु श्रुतः। यदित्थं न रोषश्चेद् भवतां तदा कांश्चित् श्लोकस्यास्य दोषगुणानुद्भावयामः। दिग्विजयी प्राह, अवहिता वयम् शक्तिश्चेदुद्भावय। तदा श्रीगौराङ्ग उवाच श्लोकेऽस्मिन् पञ्चदोषान् पञ्चगुणांश्च पश्याम इति।

(क्रमशः।)

गोस्वामि श्रीश्यामलाल सिद्धान्तवाचस्पतिः।

---

## तत्त्वप्रपञ्चे

### वैदिकोपायः।

( पूर्व्वप्रकाशितात् परम्। )

अथ स्वीकुर्य्याम् त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थं इति। किन्तु स्वल्पायाससाध्ये प्रत्यक्षसिद्धे सुकरे आपामरपण्डितोपयोगिनि च दुःखनिवृत्त्युपाये सति किमितिदुष्करक्लेशराशिसम्पन्नेन तत्त्वज्ञानेन दुःखनिवृत्तुग्रपायेन ? तथाच लौकिकी गाथा।

"अर्के (१) चेन्मधु विन्देत किमर्थं पर्व्वतं व्रजेत्।
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्॥ १॥"

तथाहि—त्रिविधञ्च तावद्दुःखम्, आध्यात्मिकमाधिभौतिकमाधिदैविकञ्च। तत्राध्यात्मिकस्य शारीरदुःखस्य रोगादेर्निवृत्तये भिषगुद्भावितमौषधमेव प्रभवति। यथा प्रत्यक्षफलप्रदं पूर्णेन्दुयोगनामक" मौषध(२) ससंशयं प्रमेहं निवर्त्तयत्येव। एवं मानसिकस्याप्याध्यात्मिकस्य कामाद्युत्थितस्य दुःखस्य निवृत्तये मनोरमरामापानभोजनविलेपनवसनालङ्करणप्रभृतयः सुकरा दृष्टोपायाः शक्तिमन्तो विद्यन्ते। एवमाधिभौतिकमपि दुःखं मानुषपशुपक्ष्यादिनिमित्तं सुनीतिशास्त्रनैपुण्यं निरुत्पातस्थानवासादि निराकरिष्यति। तथा आधिदैविकमपि दुःखं यक्षराक्षसादिजनितं मणिमन्त्रमहौषधाद्युपयोगः सम्यक् प्रतीकरिष्यति। अतः किमिति बह्वायाससाध्यं तत्त्वज्ञानमिति। सत्यमस्ति लौकिकः प्रत्यक्षितोपायस्तापशान्तये सुकरः, किन्तु तेन तेनोपायेन सुलभेनापि औषधादिना तत्तद्दुःखं अवश्यमेव निवर्त्तिष्यते इति न विश्वासः। निवृत्तं वा कालान्तरे नोत्पत्स्यते, वा अपरो रोगो न जनिष्यते इति न नियमः। तत्त्वज्ञानन्तु

---

(१) अर्के अर्कवृक्षे। अक्के गृहकोणे। (२) कलिकाता, कुमारटुलि २ संख्यकभवनस्थ श्रीयुक्त निशिकान्तसेनकविभूषणस्य।

अवश्यमेव चिरायैव त्रिविधदुःखं निवर्त्तयिष्यते एव मोक्षात्। न तु लौकिक दृष्ट उपायः। अतः सूत्रकारोऽप्याह—

"न दृष्टात् तत्सिद्धिर्निवृत्तेऽप्यनुवृत्तिदर्शनात्॥ २॥ इति।

अथ निदाघसन्तप्तः पान्थस्तरुच्छायमाश्रयति सेवते च व्यजनादिसमीरणम्, उपचरति च हिमसङ्घातम्(२) इति सहस्रशो दृश्यते, न तेन चिराय सन्तापः शमतामेति। तद्वदौषधादिना चिराय दुःखानिवृत्तौ नासौ पुरुषार्थो भवितुमर्हति। तथाच सति तत्र पुरुषो न प्रवर्त्तताम्। सत्यं दृष्टकारणेन औषधादिना कथञ्चिद्दुःखनिवृत्ते रत्यन्तपुरुषार्थत्वं तस्य मास्तु, किन्तु सामान्यतो यथाकथञ्चित् पुरुषार्थत्वं तस्यास्त्येव। कस्मात्—यथा क्षुधादुःखार्त्तः तत्प्रशमनायान्नं भुङ्क्ते, न खल्वन्नभोजनं चिराय क्षुद्दुःखं निराकरोति, प्रवृत्तिमांश्च तत्र पुरुषो दृश्यते। तथा रोगादिदुःखस्य औषधादिना पुनःपुनः प्रतीकारात् तत्र पुरुषः प्रवर्त्तते, अतस्तस्य स्वल्पपुरुषार्थत्वम्। यतः पुरुषार्थो नाम पुरुषाणां बुद्धेरिष्टः। परन्तु निदाघसन्तप्तस्य छायाश्रयवत् स्वल्पपुरुषार्थं इत्युच्यते, न तु परमपुरुषार्थः। परमपुरुषार्थस्तु मोक्ष एव। एतदेवसूत्रकारोऽप्याह—"प्रात्यहिकक्षुत्प्रतीकारवत् तत्प्रतीकारचेष्टनात् पुरुषार्थत्वम्॥३॥ इति।"

फलतस्तु अस्माभिरेव मन्दमतिभिरदूरदर्शिभिः मन्दपुरुषार्थोऽपि दृष्टोपाय औषधादिः श्रद्धीयते संसेव्यते च। किन्तु प्रेक्षावद्भिर्दृष्टसाधनदुःखप्रतीकारमौषधादि नैवोपादीयते। ते खलु सुधिय एवमालोचयन्ति—न हि सर्व्वस्मिन्नेव देशे, सर्व्वस्मिन्नेव काले सर्व्वेषु दुःखेषु वा भिषजः सुलभाः, ते वा सुलभाः, किन्तु औषधमपि न सुलभम्, सुलभं वा तत्, न तेनात्यन्तत्रिविधदुःखनिवृत्तिः स्यात्। यदि वा सर्व्वस्मिन् देशे काले दुःखे वा वैद्यादीनामुपायानां सम्भवस्तथापि औषधादियाच्ञा दुःखम्, तदर्थम् धना-

(२) बरफ् इति यस्य प्रसिद्धिः।

र्ज्जनदुःखं वा पुनरन्यदुत्पत्स्यते। अतो दुःखप्रतीकाराय लौकिकोपायः हेयः। एतदेव सूत्रकारोऽप्याह।

"सर्व्वासम्भवात् सम्भवेऽपि सत्तासम्भवाद्धेयः प्रमाणकुशलैः॥४॥इति।"

अतएव पातञ्जलेऽप्युक्तम् "परिणामताप संस्कारदुःखैर्गुणवृत्तिविरोधाच्च सर्व्वमेव दुःखं विवेकिनः"। साधं। १५ सू।

आस्तां तत् माभूल्लौकिक उपायो निश्चयतया चिराय वा दुःखप्रतीकाराय समर्थः। वेदोक्तस्तु ज्योतिष्टोमादियज्ञः दुःखत्रयमवश्यं चिराय च निर्मूलयिष्यति, तत्त्वज्ञानापेक्षया यज्ञादिरेव दुःख प्रतीकारोपायः सुलभः, अतः स एवालम्ब्यताम्, तथापि तत्त्वज्ञानं निष्प्रयोजनम्? वेदोक्तयज्ञादिस्तु स्वर्गं प्रदास्यति, ततो दुःखं नैव स्थास्यति। तथाच श्रुतावुक्तम्। "अश्वमेधेन स्वर्गकामो यजेत" इति। स्वर्गस्तु केवलं सुखम्, तत्र दुःखसंभवो नास्ति, यथात्र भोजनसुखे पाकदुःखमस्ति, तत्र न तथा। स्वर्गसुखन्तु भोगानन्तरं न तिरोभवति, यथाच क्षणादुपरि भोजनसुखम् नश्यति, तन्नतथा।

स्वर्गे तु यदेवाभिलष्यते तदेव तत्क्षणात् उपतिष्ठते, यथात्र मरुभूमौ असमये वा प्रार्थितमपि भोजनसुखं नोपैति तत्र न तथा। तथाचोक्तम्।

"यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
अभिलाषोपनीतं यत् तत्सुखं स्वःपदास्पदम्॥" (१)

स्वर्गसुखं न क्षीयते न जरामरणादिना च परिभूयते, न शत्रुभिरपक्रियते, तथाचोक्तम्।

"अपामसोम ममृता अभूम अगन्मज्योतिरविदाम देवान्।
किन्नूनमस्मान् कृणवदरातिः किमुधूर्त्तिरमृतमर्त्त्यस्य॥" (२)

---

(१) स्वःपदास्पदम् "स्वर्गशब्दप्रतिपाद्यम्। (२) "कदाचिदिन्द्रादीनां देवानां कल्प आसीत्। कथं वयममृता अभूमेति विचार्य्यासु यस्मादयमपामसोमं पीतवन्तः सोमं तस्मादमृता अभूम अमरा भूतवन्त इत्यर्थः। किञ्च अगन्मज्योतिः स्वर्गमिति। अविदाम देवान् दिव्यान् विदितवन्तः। एवञ्च किन्नूनमस्मान् कृणवदरातिः नूनं निश्चितं किम् अरातिः शत्रुः अस्मान् कृणवत् कर्त्तेति। किमुधूर्त्तिरमृतमर्त्त्यस्य धूर्त्तिर्ज्जरा हिंसा वा किं करिष्यति अमृतमर्त्यस्य।

अपक्षये सति स्वर्गस्य अमृतत्वं नैव तेषामुपपद्यते। तस्माद्वेदोक्तयज्ञादिरिव मुहूर्त्तयामाहोरात्रसम्वत्सरादिसाध्यत्वेन अनेकजन्मपरम्परानिकायासलभ्यात्वात् तत्त्वज्ञानादतीव सुलभ इति। अन्यच्च वेदे यज्ञादीनामतिशयं फलं श्रूयते। यथा "सर्व्वान् लोकान् जयति, मृत्युं तरति, पाप्मानं तरति, ब्रह्महत्यां तरति, यो योऽश्वमेधेन यतते" इत्यादि।

(क्रमशः।)

---

## पूर्व्वकालीनाः कथं दीर्घायुषः ?

(पूर्व्वप्रकाशितात् परम्।)

न नक्तं दधि भुञ्जीत। न शक्तूनेकानश्नीयात्। न निशि भुक्त्वा न बहून् न द्विर्नोदकान्तरितान्॥

"One should not take curds in the night. The flour of (fried) barley should not be taken by itself (*i. e.* without mixing it with ghee and sugar). One should not take a large quantity of barley-flour. Nor should one take such flour twice a day. Nor should one take it without mixing it with water."

नाछित्त्वा द्विजैर्भक्षयेत्। नाऽनृजुः क्षुयान्नाद्यान्न शयीत। न वेगितोऽन्यकार्य्यः स्यात्। न वाय्वग्निसलिलसोमार्कद्विजगुरुप्रतिमुखं निष्ठीविकोच्चारमूत्राण्युत्सृजेत्॥ न पन्थानमवमूत्रयेत्। न जनवति नान्नकाले। न जप्यहोमाध्ययनवलिमङ्गलक्रियासु श्लेष्मसिंहाणकं मुञ्चेत्।

"One should not eat without properly masticating the food with the teeth. One should not sneeze or eat or lie down (for sleeping) in a bent posture. One should not engage in any act when one feels an impulse or urging of nature (without first attending to it)."

"One should not spit, or make water, or answer the other call of nature, with face turned towards the blowing wind, a blazing fire, a piece of water, or the Moon, or the Sun, or a person of the regenerate class, or one's preceptor. One should not commit nuisance on a road or street. One should not eject the phlegm or mucus of one's nose amid a place that is crowded, or when one is engaged in eating, or when one is employed in reciting one's prayers or in performing the *homa* or in reading with one's preceptor or in dedicating offerings to the deities, or when one is doing any auspicious or religious act."

न स्त्रियमवजानीत। नातिविस्रम्भयेत्। न गुह्यमनुश्रावयेत्। नाधिकुर्य्यात्॥ न रजस्वलां न तुरां नामेध्यां नाशस्तां नानिष्टरूपाचारोपचारां नादक्षां नाकामां नान्यकामां नान्यस्त्रियं नान्ययोनिं ना यानौ नचैत्य चत्वरचतुष्पथोपवनश्मशानायतनसलिलौषधिद्विज-गुरुसुरालयेषु न सन्ध्ययोर्नतिथिषु नाशुचि नाजग्धभेषजो नाप्रणीत-सङ्कल्पो नानुपस्थितप्रहर्षो नाभुक्तवान् नात्यशितो न विषमस्थो न मूत्रोच्चारपीड़ितो न श्रमव्यायामोपवासक्लमाभिहतो नाऽरहसि व्यवायं गच्छेत्॥

"One should not disregard one's wife. Nor should one confide too much in her. One should not acquaint one's wife with one's secrets. One should not allow one's wife to interefere in all one's affairs. One should not have sexual congress with a woman while she has menstruated, or with one who is ill, or with one who is afflicted with leprosy and other diseases of the kind, or with one that is of disagreeable features or disagreeable conduct, or with one that has no cleveroness, or with one that does not reciprocate one's desire, or with one that loves another, or with one that belongs to a different caste or order. One should not have sexual congress against the order of nature. One should not have sexual congress under the shade of a *chaitya* tree, or on a ground intended

for a Sacrifice, or on a spot where four roads meet, or in a grove, or in a crematorium, or on a sacrificial altar, or in a tank, lake, or other water, or in a spot where sacred or medicinal plants and herbs grow, or in the house of a regenerate person, or in that of one's preceptor, or in that of a deity. One should not have sexual congress at dawn or in the evening, or on such days of the Moon as have been declared (in the scriptures) to be unfit for such acts, or when one is impure, or when one has not taken a provocative tonic or other medicine, or when one is anxious in consequence of one's not having accomplished what is in one's heart, or when one's heart is not cheerful, or when one is hungry (for not having taken any food), or when one has overloaded one's stomach, or when one has not a level bed to lie upon, or when one is afflicted by the urgings or urine or fæces, or when one is spent by toil, exercise, fast, and exhaustion. One should not, again, indulge in such congress except in privacy."

न सतो न गुरून् परिवदेत्। नाशुचिरभिचारकर्म्मचैत्यपूज्यपूजाध्ययनमभिनिर्व्वर्त्तयेत्! न विद्युत्स्वनार्त्तवीषु नाभ्युदितासु दिक्षु नाग्निसंप्लवे न भूमिकम्पे न महोत्सवे नोल्कापाते न महाग्रहोपगमने नष्टचन्द्रायां तिथौ न सन्ध्ययोर्नामुखाद्गुरोर्नावपतितमतिमात्रं नतान्तस्वरं न विस्वरं नानवस्थितपदं नातिद्रुतं नातिविलम्बितं नातिक्लीवं नात्युच्चैर्नातिनीचैः स्वरैरध्ययनमभ्यस्येत्। नाति समयं जह्यात्। न नियमं भिन्द्यात्।

"One should not dispraise one's seniors, or those that are good. One should not, while impure, perform any Vedic act, or worship a sacred tree or any adorable deity, or engage oneself in study. When lightnings appear out of season, when the horizon all around becomes red as if ablaze with fire, when a conflagration takes place, when an earthquake happens, when a great festival is going on, when meteors fall down, when the great planets eclipse each other when the

Moon is on the fourth lunation on either half of the month of Bhadra, in the two twilights, without the help of a living preceptor, without guarding against even a single letter falling off, exceeding the proper measure, with a languid voice, with a disagreeable voice, without clearly pronouncing all the words, without avoiding excessive haste, without at the same time avoiding excessive slowness, without abstaining from pronouncing the words with excessive slowness, without avoiding excessive loudness, and without avoiding a voice that is inaudible, one should not study (the scriptures). While studying, one should not mingle with fellow students; nor should one break the rules one has formed (in respect of study)."

न नक्तं नादेशे चरेत्। न सन्ध्यास्वभ्यवहाराध्ययनस्त्रीस्वप्नसेवी स्यात्। न बालवृद्धलुब्धमूर्खक्लिष्टक्लीवैः सह सख्यं कुर्य्यात्। न मद्यद्यूतवेश्याप्रसङ्गरुचिः स्यात्। न गुह्यं विवृणुयात्। न कञ्चिदवजानीयात्, नाहंमानी स्यात्। न दक्षो नादक्षिणो नासूयको न ब्राह्मणान् परिवदेत्। न गवां दण्डमुद्गच्छेत्। न वृद्धान् न गुरून् न गणान् न नृपान् वाधिक्षिपेत्। न चाति ब्रूयात्। न बान्धवानुरक्तकृच्छ्राद्द्वितीयगुह्यज्ञान् वहिः कुर्य्यात्।

"One should not rove in the night, especially in an unknown land. In the two twilights one should avoid eating, study, sexual congress, and sleep. One should not make friendship with children, with men that are old, with those that are covetous, with men that are ignorant, with persons afflicated with diseases, and with those that are destitute of manliness. One should conquer all propensities for alcoholic stimulants, gambling, and women of ill fame. One should never give out the secrets of others. One should not disregard any one. One should not indulge in annoying others. One should seek to be clever. One should never be niggardly but should practice liberality. One should cast off malice. One should never speak ill of Brahmanas. One should never strioke a

cow with a stout stick. One should never censure them that are old, or them that are one's seniors, or them that are united for a common purpose, or them that are ruling chiefs. One should never indulge in harsh speeches. One should not cast off one's friends, or those that are devoted to oneself, or those that render help in seasons of distress, or those that are acquainted with one's secrets."

नाधीरो नात्युच्छ्रितसत्त्वः स्यात्। नाभृतभृत्यः नाविश्रब्धस्वजनो नैकः सुखी। न दुःखशीलाचारोपचारी न सर्व्वविश्रम्भी। न सर्व्वाभिशङ्की! न सर्व्वकालविचारी। न कार्य्यकालमतिपातयेत्। नापरीक्षितमभिनिविशेत। नेन्द्रियवशगः स्यात्॥

न चञ्चलं मनोऽनुभ्रामयेत्। न बुद्धीन्द्रियाणामतिभारमादध्यात्। न चाति दीर्घसूत्री स्यात्। न क्रोधहर्षावनुविदधीत। न शोकमनुवशेत्। न सिद्धावौत्सुक्यं गच्छेत्। नासिद्धौ दैन्यम्। प्रकृतिमभीक्ष्णं स्मरेत्। हेतुप्रभावनिश्चितः स्यात्। हेत्वारम्भानतश्च। न कृतमित्याश्वसेत्, न वीर्य्यं जह्यात्। नापवादमनुस्मरेत्।

"One should not be impatient and haughty. One should properly support one's servants. One should inspire confidence in one's relatives. One can never be happy by taking or enjoying anything alone and without dividing it with others. One should not adopt such conduct, such practices, and such usages, as are productive of pain or misery. One should not trust every body, nor should one mistrust every body. One should not always reflect when called upon to act. One should not lose (in hesitation) the opportunity for doing an act. One should not enter the house of an unknown person. One should not suffer oneself to be overmastered by one's senses."

नाशुचिरुत्तमाज्याक्षततिलकुशसर्षपैरग्निं जुहुयात्। आत्मानमाशीर्भिराशासनः। अग्निर्मेमापगच्छेच्छरीराद्वायुर्मे प्राणानादधातु। विष्णुर्मे बलमादधातु। इन्द्रो मे वीर्य्यं शिवा मां प्रविशन्त्वापः। आपोहिष्ठेत्यपः स्पृशेत्। द्विः परिमृज्यौष्ठौ पादौ चाभ्युक्ष्य मूर्द्धनि

खानि चोपस्पृशेदद्भिरात्मानं हृदयं शिरश्च ब्रह्मचर्य्यस्नानदानमैत्री कारुण्यहर्षकृतप्रशमपर: स्यादिति ।

"When the mind becomes restless one should not employ it upon any task. one should not impose a too heavy burden upon one's understanding or the senses. One should not yield to procrastination. One should not act under the impulse of wrath and malice. One should not indulge in too much joy when one's object is accomplished. Nor should one give way to cheerlessness on the failure of one's object. One should always recollect the origin or cause of one's being. One should firmly believe in the efficacy of causes (as represented by good and bad acts). One shuld commence one's acts under circumstances calculated to give success. One should never deem one's acts (in this world) to have all been accomplished. One should never do anything whose consequence would be the loss of one's manliness. One should never diffuse another's opprobrium. One should first purify oneself by bath and other (purificatory rites) and then make offerings, to the sacred fire, of good *ghee*, clean rice, sesame seeds, Kuca grass, and mustard seeds. On the completion of this rite one should invoke a blessing upon oneself, uttering the following *mantras*, viz.:—Let not Agni (fire) go out of my body! Let Vayu (Wind) grant me life-breath! Let Vishnu grant me strength! Let Indra grant me energy! Let Civa cause all the waters to enter my body!—One should then touch water, uttering the *mantras* beginning with "Apohishta,&c."One should then twice wash one's lips with water and one's feet also. After this one should sprinkle water on one's head and then sprinkle that element on the sky above the head. After this one should (again) sprinkle water over one's body, the region about the heart, and the head. Daily accomplishing these rites, one should betake oneself to the practice of *Brahmachayya*, the duty of teaching, and of friendship and compassion, and cultivate cheerfulness, and by these means to acquire tranquillity of Soul."

( क्रमश: । )

# ब्राह्मणः ।

अस्मिन् भारतवर्षे वर्णानां ब्राह्मणः प्रभुरिति व्यवस्थितिर्वेद-समयात् प्रभृति इदानीन्तनेऽपि सर्व्वत्रैव वर्त्तते। वेदाध्ययनशील-त्वात् १ शुद्धाचरणत्वात् २ सततपरार्थतत्परत्वात् ३ अनेकशास्त्रा-भ्यासित्वाच्च, ब्राह्मणो वर्णेषु श्रेष्ठो जातः। तदा च ब्राह्मणः सर्व्वेभ्यो विषयेभ्यः पराङ्मुखः सन् लोकहिताय नानाग्रन्थान् प्रणीतवान्। सुक्तीः पथश्च सम्यक् प्रदर्शितवान्। भारतञ्च समुन्नतिनगशीषप्रान्ते स्थापितवान्। इत्यञ्चाद्भुतानि कार्य्याणि सम्पाद्य जगति महतीं प्रसिद्धिं लब्धवान्।

पुरा च अन्नत्या ब्राह्मणातिरिक्ताः केऽपि विद्यासु तादृशीं योग्यतां न समपादयन्। विद्यायास्तत्त्वं ज्ञातुं संग्रहीतुं प्राप्तुञ्च ते सम्यक् नायतन्त। शूद्रा विद्याश्रवणादपिन्यषिध्यन्त, अनधीतविद्या अनव-गततत्त्वाः शूद्रप्रभृतयो ब्राह्मणान् देववद् आद्रियन्त। तांश्चेश्वरवत् पूजयितुं प्रारभन्त, ते च तेभ्योऽखिलानि पितृदेवसम्बन्धीनि कर्म्माणि समार्पयन्, इत्थं दिने दिने ब्राह्मणाः खलु विद्याभ्यासे कर्म्म काण्डे च निपुणतां प्राप्य अन्यानधिकृतवान्।

परन्त्विदानीं प्रकाशं नीते मुद्रायन्त्रे, सर्व्ववर्णेषु सम्यक् सम-मध्यापितेषु सर्व्वत्र विदितेषु शास्त्रतत्त्वेषु च कः खलु ब्राह्मणानेव विद्वत्तमान् मन्यते। को हि नाम मूर्खो देवस्थाने निरक्षरं ब्राह्मणं पूजयिष्यति।

सम्प्रति तु अधमवृत्तीनां शूद्राणां जीविकामधीकृत्य ब्राह्मणो हि जीविकां निर्वाहयति।

क्वचित् स पचति, क्वचित् सेवते, क्वचित् लौहशकटवर्त्मनि "पानिपाँड़े" इतिप्रवंनाम्ना जलमुद्वहति, भैक्ष्येण दिनानि सम्पूर्णानि

यापयति, स्थानात् स्थानं वापत्राणि नयति, एवमेकोनविंशतितमे ख्रीष्टीयेऽब्दे नान्यानि ब्राह्मणानां पृथक् कार्य्याणि दृश्यन्ते।

"वेदानधीत्य वेदौ वा वेदम्वापि यथाक्रमात्।
अविप्लुत ब्रह्मचर्य्यो गृहस्थाश्रममाविशेत्॥"

इत्यस्मिन् स्थाने पुस्तकानि पुस्तके पुस्तकं वा समाप्य "कच-हर्य्याश्रम" माविश्य गोदानादिगृह्यकर्मस्थाने मुग्धान् ग्राम्यान् मिथ्याप्रलापैर्व्वञ्चयेदिति व्यवस्था सर्व्वत्रैव प्रचलिता इति।

काव्यतीर्थः शिवशङ्कर शर्म्मा।
वि, एन्, कलेज, बांकीपुर।

---

## प्रवेशिकाप्रश्नास्तदुत्तरादर्शाश्च।

### लाहोर-विश्वविद्यालयस्य।

ख्रीष्टियाब्दः १८९३।

V. Write down the passive participle (क्त) of भिद् and भुज् the comparative & superlative degrees of पटुः and मृदुः with ईयस् and इष्ठ and the abstract nouns of मुच् and वच् with ति।

*Answer.*

भिद् धातोः क्तप्रत्यये कृते भिन्न इति शब्दः
भुज ... ... भुक्त ... ...
पटु शब्दात् ईयस् ... पटीयस् इति शब्दः
तस्य प्रथमैक वचने पटीयान् इति।
पटु शब्दात् इष्ट प्रत्यये कृते पटिष्ठ इति शब्दः
तस्य प्रथमैकवचने पटिष्ठः इति।
मृदु शब्दात् ईयस् प्रतग्रये कृते म्रदीयस् इति शब्दः
तस्य प्रथमैकवचनं म्रदीयान् इति।

मृदु शब्दात् इष्ठ प्रत्यये कृते म्रदिष्ठ इति शब्दः
तस्य प्रथमैकवचनं म्रदिष्ठ इति।
मुच् धातोः क्ति प्रतये कृते मुक्ति इति शब्दः
वच् ... ... उक्ति ... ...

VI. Re-write the following sentences correcting the mistakes :—

रामो तस्य सह वनं जगाम। दीनस्य प्रति दया उचितम्। दरिद्रं वस्त्रं देहि। पापात्मनां सङ्गं परित्यक्तुं साम्प्रतम्। सहस्राः वृक्षाः इदं ग्रामे वसन्ति स्म। ईश्वरप्रसादेन मे क्लेशो न इयम्।

*Answer.*

राम स्तेन सह वनं जगाम। दीनं प्रति दया उचिता। दरिद्राय वस्त्रं देहि। पापात्मनां सङ्गः परित्यक्तुं साम्प्रतम्। सहस्रं वृक्षाः अस्मिन् ग्रामे वसन्ति स्म। ईश्वरप्रसादेन मे क्लेशो नायम्।

VII. Transláte into Sanskrita.

वोह कानों का वहरा है। मेरा भाइ घोड़े पर से गिर पड़ा और गिरते ही मर गया। राम ने रावण को तीर से मारा। उसने मुझे नमस्कार की और कहा की ऐसा करणा तुम्हे उचित नही है। विद्या से अज्ञानरूपी अन्धकार दूर होता है।

[ दीर्घत्वादस्य प्रश्नस्य अंशमात्रं परिगृहीतम्। ]

*Answer.*

असौ कर्णाभ्यां वधिरः। भ्राता मे अश्वात् पपात, पतित एव मृतश्च। रामः शरेण रावणं निहतवान्। स मामभ्यवीवदत्, अब्रवीच्च न भवतः, एतत्करणमुचितम्। विद्यया अज्ञानरूपं तमः निराक्रियते।

---

श्रीश्रीदुर्गा ।

शरणम् ।

# संस्कृतचन्द्रिका ।

( १८१५ शाकाग्रहायणमासस्य । )

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव ।

मायावलम्बते सेयमम्बा श्रीशिवसुन्दरी ॥

## उद्भट-श्लोकाः ।

"विश्वम्भर ! भरास्मान् वा, विश्वस्वाहा वह्निष्कुरु ।

अथ पक्षद्वयाभावे त्यज विश्वम्भरात्मताम् ॥ ३५ ॥"

"अस्मान् विचित्रवपुषश्चिरपृष्ठलग्नान्, कस्माद्विमुञ्चसि विभो ! यदि मुञ्च मुञ्च ।

हा हन्त केकिवर ! हानिरियं तवैव, गोपालमौलिमुकुटे भविता स्थितिर्नः ॥३६॥"

"प्रोषितेन भवता स्फुटीकृता हन्त नाथ ! रत्नयोरभिन्नता ।

अद्य ते यदलयोऽरितां गताः, सत्यमेव यदवादि धीमता ॥ ३७ ॥"

"नहि च्छायादानैः पथिकजनसन्तापहरणम्, फलैर्व्वा पुष्पैर्व्वा न सुरमनुजप्रीननमपि ।

अरे रे मन्दारद्रुम ! सहजमेतत्तनुचितम्, त्वतीभूतो रत्नस्यपरमपरेषां फलमपि ॥ ३८ ॥"

"अग्निकोणं गतः सूर्य्यः शीते सङ्कुचितं दिनम् ।

लीनो वह्निः स्त्रियाः क्रोड़े राजन ! निःस्वस्य का गतिः ॥ ३९ ॥"

"बिभीषयति शीतलं जलमहिर्व्विपुष्पानिव,

प्रलोभयति कामिनीस्तन इवास्तधूमोऽनलः ।

सुतात्मज इव लिपौ दिनमणेः सुखाकुर्व्वते,

कुटुम्बकटुवागिव व्यथयते तुषारोऽनिलः ॥ ४० ॥"

"ताम्बूलं तपनस्तैलम् तुला तन्वी तनूनपात् ।

हेमन्ते ये न सेव्यन्ते ते नरा विधिवञ्चिताः ॥ ४१॥"

# उन्मत्त-मद्यपायि-छिन्नपुच्छ-कीटदष्टदुष्टवानरः।

हे वालकाः! किञ्चित् प्रीणयितुं श्रीमतः विचित्रं चित्रमेकं विलोकयितुं प्रयस्यामि। किन्तु अभूतपूर्व्वं मनसाप्यननुमेयं तथाविधमङ्कयितुं चित्रं शक्तोऽस्मि नवेति सम्यक् सन्देहमवगाहते मे मनः। यदि कदाचित् चिन्मयमानन्दमयं परब्रह्मापि ध्यातुं हृदयं शक्नुयात् तथापि चिकीर्षितं चित्रं चिन्तयितुं मनोऽपि मे चपलं पलायते।

चिन्तयन्तु तावद्भवन्तः श्रीमन्तः। एकतो वानर एव प्रकृत्या चटुलः, स चेत् उन्मत्तश्च यदि मद्यं पिवेत्, पीतमद्यश्च यद्यसौ भृङ्गरोलै (१) दंश्येत, तदासौ वानरः कथंकारं तदवस्थो वर्ण्यते। तथापि यतिष्ये।

अस्ति दक्षिणापथे किष्किन्ध्यानाम महारण्याणी, तत्र कोटराक्षो नाम राजवंशीयः कश्चिद्वानरराजः प्रतिवसति। रामदासनामक स्तस्य नन्दन आसीत्। तस्मिन् तदेकपुत्रस्य कोटराक्षस्य अतीव स्नेहः समजनि। रामदासस्य वानरस्यापि वालस्वभावसुलभं चापल्यं समधिकं शुशुभे। किन्तु चापल्ये सञ्जातप्रश्रयः स वाल्यमतिक्रान्तोऽपि न तद्विसस्मार। प्रतुत्त अतिमात्र तस्य चापल्यं व्यवर्द्धत।

वालचापल्यं तस्य यौवनेऽप्यनिवर्त्तनात् क्षिप्तलक्षणत्व न परिणतम्। अन्ये च वानरवालका स्तं "क्षिप्तक्षिप्त" इति प्रदत्तकरतालं द्विगुणमुन्मादयन्ति। रामदासोऽपि क्रोधोन्मत्तः कञ्चित् भक्षयितुं चेष्टते, कस्यचित् गृहं दहति, वृक्षं वा पातयति फलानि वा अधः क्षिपति। कोटराक्षस्य तत्पितुः सौजन्यात् कियन्ति

(१) भीमरुल् इति यस्य प्रसिद्धिः।

दिनानि प्रतिवेशिनो वानरा रामदासस्य दौर्जन्यं तितिक्षाञ्चक्रु:। किमधिकं एवं प्राणिन एव नासन्, यस्य खलु पश्चात् स न प्रददौ कठिनीम्*। परिशेषे च नितरामसहमाना स्ते पादप्रहारेण, मुष्टिपातेन, कर्णमर्द्दनेन, अर्द्धचन्द्रेण, चपेटाघातेन च तमादर्त्तुमारेभिरे। कोटराक्षस्तु सदा समुद्विग्न: पुत्त्रप्रकृत्या, तं पठनाय विद्यालये प्रदत्तवान्। अयमेव दुष्टं विनेतुं प्रथमोपाय:। पठित्वा च कियन्ति दिनानि शास्त्रं, चोरयित्वा च गुरुधनं विवदमानश्च विद्यार्थिभि: लब्धप्रहारश्चासकृत् अप्राप्तमाधुर्य्यश्च समाप्य पाठं इंरेजिं पठितुं प्रवृत्त:। तत्रापि प्रीतिमलभमान: पारस्यं, क्रमश: वङ्गीयं व्याकरणं, न्यायं, धर्मशास्त्रं, काव्यमलङ्कारं चरमे च योगशास्त्रमध्येतुं प्रवर्त्तमान: एव किञ्चिदाघ्राय न्यवृत। स खल्वात्मानं सर्व्वशास्त्रदर्शीति मन्यते स्म, किन्तु सर्व्वत्रैव प्रहारं सुलभमलभत सम्यक्, तथापि चापल्यं तस्यान्वपि न्यूनतां न प्राप्तम्, परन्तु किञ्चित् किञ्चित् नवनवमुद्भूतम्। तथापि तस्य पिता तमुपसान्त्वयितुं द्वितीयमुपायं विवाहमचीकरत्। तत्रापि दुश्चेष्टया स श्वशुरगृहे श्यालकात् प्रहारमापादि।

दुष्टबालानां कश्चिदध्ययनेन साधूभवति कश्चित् विवाहेन। ताभ्यामपि हेतुभ्यां यो न दौर्ज्जन्याद्विरमति स पितुर्म्मरणात् परं परिवारादीनां भरणे सन्त्रस्त: सुजनीस्यात्। कोठराक्षस्तृतीयमुपायमपेक्षमाणो दिनान्यतिक्रामति। क्रमशस्तु कीटराक्षस्तीव्रदु:खेन पुत्त्रमूर्खताजातेन सह शमनसदनं जग्मिवान्। ततो रामदासो राज्यभारं जग्राह। तदा तस्य सुहृदो यूथभ्रष्टाश्चत्वारो बभूवु:। तेषामेको वेत्रलतया चिह्नितपृष्ठ: कारामुक्तश्चौर:। द्वितीय: पारदारिकश्छिन्नैककर्ण:। द्वावपरौ मद्यपायिनौ। प्रथमन्तावत् रामदास: धूमवर्त्तिपाने (१) शिक्षां प्राप, ततस्ताम्रकूटम्, तत:

* काठी इति यस्य प्रसिद्धि:। (१) चुरट् इति यस्य प्रसिद्धि:।

शक्राशनम्, (१) पीतवान्। एकदा पीत्वा च निर्भरं शक्राशनं दर्शेऽपि पूर्णचन्द्रं व्योम्नि उत्तुङ्गमातङ्गतुरङ्गांश्च ददर्श, जहास चानिमित्तम्, तत्रानुभूय निरतिशयमानन्दं ततोऽपि सुखाकरं मद्यं पातुं शिक्षितवान्, एवं मद्यपानोपकरणं तावद्दूराचरणं किञ्चिदपि नावशिष्टमकरोत्, तेन हि पितृवित्तमशेषं निःशेषितम्, चरमे च पितूरोपितं रम्भाफलञ्च भुक्त्वा भोजयित्वा चान्यान् मद्यबन्धून् तद्वनं व्यक्रीणात्।

एवं दिनेषु गच्छत्सु रामदासस्य पवित्रहृदये धर्म्मप्रवृत्ति र्डुढौके, विचार्य्य च युक्त्या तत्र तत्रेति हिन्दुधर्म्मस्य पैत्रिकस्य विज्ञाय निःसारत्वम्, भूत्वा च "देवीमिव विवीं प्रणयिणीं परिणेष्यामि" इत्येवं मनसि आशादासं खीष्टधर्म्मा मूत्रितपैत्रनामकः "आर्, डि," नाम दधार। तत्रापि विवीमुद्वोढुं कृतकहलः प्रहारमाप। तत्र च मनोरथसाधने वञ्चितः शाखायाः शाखान्तरमिव तस्मात् अद्वैते ब्रह्मणि निविशमानो ब्राह्मधर्म्मं जग्राह। तच्च धर्म्मं यथेच्छाचरणात् गुरुपुरोहित रजकनापितहस्तमुक्तश्च ससुखाकरं मेने।

किन्तु तमपिधर्म्मं बहुविलासवस्तुसापेक्षं बह्वर्थसाधनञ्च दरिद्रः सः केनापि कारणेन तत्र लब्धप्रहारश्च "आर, डि, वानरः" तत्याज। आददे च तान्त्रिकमतं वीराचारम्। जहौ च पश्वाचारम्। तत आरभ्य स "रामादासः" शक्तिमुपासीनः पूर्णाभिषिक्तश्च त्यक्तपशुत्वो ब्राह्मणीबभूव। दधार च यज्ञोपवीतम्। दीक्षयामास च गुरुवृत्तिको बहून् वानरान्। लेभे च दक्षिणां मद्यक्रयमूल्यानि च। वीरभावेन कृतभैरवीचक्रः चक्रेश्वरः सः शक्तिपतिभ्यः प्रहारं प्राप। क्रमिकोन्नत्या च रामदासः ब्रह्मचारीबभूव। अटाट्याञ्चक्रे (२) च धर्म्मप्रचार व्यपदेशेन देशान्तरम्। ब्रह्मचारिणो वसनं कषायमावश्यकम्, विलासिता च निषिद्धा, तेन ढाकानगरीजातं सूक्ष्मपटञ्च

(१) गाँजा इति यस्य प्रसिद्धिः। (२) पुनःपुनरटतीत्यर्थे यङ्।

गैरिकद्रवरञ्जितं वासः। तथाविधरञ्जितेनैव वाससा कञ्चुकं(१)अङ्गुलित्रं (२) उपपादत्राणञ्च (३)। मृगचर्म्मणा कारिते च उपानहौ पर्य्यधत्त।

यदासौ रामदासः दण्डायमानः सदसि दिवसे धर्म्मं व्याचष्ट, तदा मन्यते लोकैः सत्यमेव साधुरयं मूर्त्तिमान् धर्म्म इति। एकदा वक्तृतां समाधाय सहवन्धुभि श्चतुर्भिर्ग्रामान्तरं प्रविश्य रहसि रात्रौ नागरवेशधारी कन्दर्प इव धृतशरीरः यावत् रमणीमेकां धर्म्ममुपदिशति, तावत् तत्रत्यैरधार्म्मिकैः उत्तमं मध्यमञ्च स प्रजघ्ने, लाङ्गुलञ्च तस्य चिच्छिदे। एवं तत्रार्ज्जितधर्म्मप्रहारः स रामदासः तथापि वीरभावेन ब्रह्मचर्य्यं न तत्याज। तदाप्यसौ रात्रिन्दिवं सुरादेवीं सिषेवे।

तेन प्रमादयन् स्थानास्थानमविचारयन्नतीवोत्प्लवमानः कदाचिदात्मानं क्लेदप्रणाल्यां कण्टकैः पूर्णे वा गर्त्ते पातयति, अखाद्य वा धुस्तूरादिफलं खदते, देवविग्रहं वा मूत्रेणाशुचीकरोति। तेनाल्पेनैव दिवसेन प्रोद्दामसुन्मादमापन्नो (४) यदाचचार तन्न वर्णयितुं शक्यते।

एवं वहुषु देशेषु लब्धप्रहार सः सञ्जात वैराग्यो वैष्णवः परमभागवतो वभूव। तथा च—

"वेदैर्विहीनाश्च पठन्ति शास्त्रम्, शास्त्रेण हीनाश्च पुराणपाठाः।
पुराणहीनाः कृषिणो भवन्ति, भ्रष्टास्ततो भागवता भवन्ति॥"

इति विष्णुसंहितायां २याध्याये।

अथैकदा रामदासः अतीवोन्मादग्रस्तः वनेषूद्दामं प्लवमानः

---

(१) जामा इति यस्य प्रसिद्धिः।

(२) दस्ताना इति यस्य प्रसिद्धिः। (३) इष्टकिं इति यस्य प्रसिद्धिः।

(४) तथाच वैद्यके—"विरुद्धदुष्टाशुचिभोजनानि प्रधर्षणं देवगुरुद्विजानाम्।
उन्मादहेतुर्भयहर्षपूर्व्वो मनोऽभिघातो विषमाश्चचेष्टा॥"

पुरतो दृश्यमानं भृङ्गरोलकुलायं पक्वकण्टकिफलमिव मन्यमानः यावत् बभञ्ज तावदसंख्यैः हुङ्कारघोषैर्भृङ्गरोलैर्भृशं दष्टः सन् एवमेव उच्चैरुत्पुप्लूयाञ्चक्रे यत् समीपवर्त्तिनि कूपे क्षिप्तात्मानं प्राणान् मुमोच ।

तथा च—

एकतो वानरश्चासौ उन्मत्तो मद्यपस्तथा ।
दष्टश्च भृङ्गरोलैः स का कथाहन्त उद्भवेत् ॥

अधुना पाठकानां हृदये स्वत एवोद्भवितुं शक्यते, महान् प्रश्न एकः । सद्वंशीयः रामदासः इत्यङ्कारं प्रहारं कथङ्कारं सोढ़वान् जीवितवांश्च इति ।

तत्रायं सिद्धान्तः । भवतु भद्रवंशीयः किन्तु यस्य खलु चेतसि एवमभिलाषो जायते मया कुकृत्यमनुष्ठेयम् । तच्च कुकृत्यं निश्चयेन प्रहारसापेक्षम्, अतः पूर्व्वं प्रहारस्वादनमावश्यकम् । प्रहार एव कुकर्म्मणः परिपक्वफलं सुमधुरम् । रामदासोऽपि तदेव सम्यक् विचार्य्य आदित एव प्रहाराभ्यासे आत्मानं शिक्षितमकरोत् । असकृत् प्रहारेण रामदासस्य पृष्ठे स्थूलतरः कीणाङ्कोजातः, तत्र प्रहारलाभे तस्यातीवानन्दः समजनि । प्रहारालाभ एव तं दुःखाकुरुते स्म । का वार्त्ता तस्य प्रहारान्मरणस्य । यथा मेषक्रीड़नकारी मुद्गरेण प्रहृत्य मेषघाटां कठिनीक्रियते क्रमशः । तेन हि मेषः मुण्डाघातेन पीठमपि पाटयति न च घाटा व्यथयते ।

यथा च मद्रराजदेशीया ऐन्द्रजालिकाः गुरुतरशिलाखण्डं सुदूरमूत्क्षिप्य वक्षसा वाहुभ्यां पृष्ठेन च सावज्ञं गृह्णाति न कामपिव्यथामनुभवन्ति ।

द्वितीयोऽपि प्रश्न एवमुदेतुं सम्भवति । न कथं रामदासेन पुनः पुनः प्रहृतेन अपमानोऽनुभूयते स्म ।

तत्रायं सिद्धान्तः । अद्वैते ब्रह्मणि परिनिष्ठितः, स रामदासः समग्रगीताग्रन्थस्य समाकृष्य सारम् ।

"मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ॥"

अयमेव श्लोकः कण्ठस्थीकृत इति, अनुससार च तन्मतमिति ।

---

## नालिकास्त्रम् ।

( पूर्व्वप्रकाशितात् परम् । )

पुरास्माभिर्नालिकास्त्रस्याकृतिकार्य्यादिकं विज्ञापयितुं प्रसङ्गतो गोलकाग्निचूर्णादीनां ( १ ) नामान्यभिहितानि । गोलकाग्निचूर्णं तु नालिकास्त्रस्य प्रधानतमाङ्गं भवत इत्यत्र बहूनामैकमत्यमस्ति । अतः पूर्व्वमेवास्माभिर्गोलकानाञ्चाधुनातनैः सह सौसादृश्य विज्ञापनार्थं सीसकादिधातूद्भवत्वं लघ्वप्रयोगादिकञ्च तेषां यथा शक्ति शास्त्रप्रमाणतः प्रदर्शितम् । ईदानीमग्निचूर्णविधानप्रक्रियादिकञ्च प्रदर्श्य आर्य्याणामस्त्राङ्ग समुन्नतिं विज्ञापयितुं प्रयतामहे । शुक्रनीतुक्ताग्निचूर्णविधानप्रणालीमवगम्य सर्व्वे हि नालिकास्त्रस्य प्राचीनत्वं स्वीकरिष्यन्तीति सुदृढं मन्यामहे ।

यथा शुक्रनीतौ ।४।७।२०१—२०२ ।

"सुवर्च्चिलवणात् पञ्च पलानि गन्धकात् पलम् ।
अन्तर्धूमविपक्वार्कस्नुह्याद्यङ्गारतः पलम् ॥
शुद्धात् संग्राह्य संचूर्ण्य सम्मील्य प्रपुटेत् रसैः ।
स्नुह्यर्काणां रसोनस्य शोषयेदातपेन च ।
पिष्ट्वा शर्करवच्चैतदग्निचूर्णं भवेत् खलु ॥"

---

( १ ) गोला, बारुद इति भाषा ।

अग्निचूर्णं निरूपयति सुवर्च्चिलवणादिति। सुवर्च्चिलवणात् ( १ ) पञ्चपलानि विंशतोलकपरिमितसुवर्च्चिलवणमित्यर्थः। गन्धकात् पलं तोलकचतुष्टयपरिमितं गन्धकमित्यर्थः। तथा अन्तर्धूमं सधूमं यथा स्यात् तथा विपच्चा दग्धा ये अर्का ( २ ) स्नुह्यादयः ( ३ ) आदिपदेन एरण्डादयः। न तेषामङ्गारतः अङ्गारात् शुद्धात् अविमिश्रादित्यर्थः। पलं संग्राह्य, सञ्चूर्ण्य तथा सम्मील्य सर्व्वाणि एकत्रीकृत्य स्नुहीनामर्काणाञ्च रसैः तदुद्भवक्षीरैः प्रपुटेत् पचेत्। ततो रसोनस्येति कर्म्मणि षष्ठी पाकेन क्षीणरसमित्यर्थः। आतपेन रौद्रेण शोषयेत्। अनन्तरं चेत् सर्व्वं शर्करावत् पिष्ट्वा संचूर्ण्य एकत्र स्थापयेदिति शेषः। एतदेव अग्निचूर्णं तदाख्यया प्रसिद्धं भवेत्। प्रकारान्तरेणैतद्विधानं यथा तत्रैव ४।७।२०३।

"सुवर्च्चिलवणात् भागाः षड् वा चत्वार एव वा।
नालास्त्रार्थाग्निचूर्णे तु गन्धाङ्गारौ तु पूर्व्ववत्॥"

नालास्त्राणामर्थे यदग्निचूर्णं तस्मिन् सुवर्च्चिलवणात् षट् वा चत्वार एव वा भागा नियोक्तव्या इत्यर्थः। गन्धाङ्गारौ गन्धकानि अङ्गाराश्च पूर्व्ववत् पलपरिमितावित्यर्थः। एतत् प्रक्रियासमुद्भूतमग्निचूर्णं नालिकास्त्रप्रयोगोपयोगि भवतीति पूर्व्वात् भिन्नतरमित्यर्थः।

प्रकारान्तरेण यथा तत्रैव ।४।७।२०६-२०८।

"अङ्गारस्यैव गन्धस्य सुवर्च्चिलवणस्य च।
शिलाया हरितालस्य तथा सीसमलस्य च॥
हिङ्गुलस्य तथा कान्तरजसः कर्पूरस्य च।
जतुनील्योश्च सरलनिर्य्यासस्य तथैव च॥
समन्यूनाधिकैरंशैरग्निचूर्णान्यनेकशः।
कल्पयन्ति च तद्विद्यश्चन्द्रिकाभादिमन्ति च॥"

---

(१) सोरा इति भाषा। (२) आकन्द इति भाषा। (३) मनसा इति भाषा।

पुनश्चाग्निचूर्णभेदान् निरूपयति अङ्गारस्येत्यादि। अङ्गारस्य अर्कवृक्षादिसमुत्पन्नस्येत्यर्थः। तथा गन्धस्य गन्धकस्य, तथा सुवर्चि-लवणस्य सोरा इति प्रसिद्धस्य, शिलायाः प्रस्तरस्य, तथा हरितालस्य, तथा सीसमलस्य, तथा हिङ्गुलस्य, तथा कान्तरजसः लौहचूर्णस्य, तथा कर्पूरस्य, तथा जतुनः, तथा नील्याश्च, तथा सरलनिर्य्यासस्य सालरसस्य समैः न्यूनैरधिकैश्च अंशैर्यथानियमं प्रयुक्तैरित्यर्थः। अनेकशो बहुविधानि चन्द्रिकाभादिमन्ति ज्योत्स्नाप्रभादियुक्तानि अग्निचूर्णानि, तद्विद्यास्तेषु विद्या येषां तादृशास्तदभिज्ञा इत्यर्थः कल्पयन्ति कुर्व्वन्ति॥

एतेन नानाविवर्णप्रकाशकाग्निचूर्णविधानमुक्तं येनाधुनिका नानाविधानाकाशधूपान् रचयन्ति।

अग्निचूर्णसम्बन्धीन्येतानि वचनानि समालोच्यावलोक्य च नालास्त्रप्रवेशनादिरूपं तत्कार्य्यं, के न गतसन्देहाः स्वीकरिष्यन्ति आर्य्याणामधुनातनवन्दुकादिसदृशं युद्धास्त्रं नासीदिति। अपि च वहुभिः पाश्चात्यपण्डितैरपि स्वकृतग्रन्थनिचयेषु प्रमाणीकृतम्, यदत्र भारतवर्षे प्राचीनराजदुर्गादिषु वृहन्नालिकास्त्रं सज्जीकृतमासी-दिति। अद्यापि च कतिपयेषु भारतप्रदेशेषु सुवृहत् सुदृढं वृहन्ना-लिकं विद्यमानं पूर्व्वेषां यशोविभूतिं स्मारयति। ये तु अनुसन्धित्-सवस्ते हि तद्विषयालोचनयात्मानं सुखी कुर्व्वन्तु।

यथा अधुनापि महाराष्ट्रदेशान्तर्गतविजयपुरे नगरे १२६० मोनकपरिमितमतीव वृहत् वृहन्नालिकमेकम्, द्वितीयञ्च पूर्व्ववङ्गे ढाकानगर्य्यां वृहत्तरतालतरुवत्, तृतीयन्तु मद्रराजदेशे "रायचूर-नगरे चतुर्द्दशहस्तपरिमितम् वृहन्नालिकम् विराजते, तच्च यवन-राजैः कारितमिति, चक्षुषा दृष्ट्वा करेण च स्पृष्ट्वा गुरुतरभाराय-माणम् हृदयसंशयमपनुदन्तु।

अत्र केचित् प्रत्यवतिष्ठन्ते। पुरा चेदार्य्याणामेतादृशमस्त्रमासीत्

तदा कथं नु तस्यावनतिर्जाता ? यदस्त्रबलेनैवाधुनातनन्पतयो जयैषिणो भवन्ति, यदस्त्रमेवाधुना सर्व्वास्त्रेभ्यो वरतिमि सर्व्ववादि सम्मतम्, यदस्त्रप्रयोगमृते न कोऽपि विजयी भवितु मर्हति, जयप्रदास्त्रनाम्नि कीर्त्तिते यदस्त्राभिधानमेव प्रथमं भवति, किं बहुना यदस्त्रबलेनैव सर्व्वास्त्रगर्व्वः खर्व्वीकृतः। कथं नु तादृशास्त्रस्यावनतिः सम्भवपरेति ? पुरातनशास्त्रादिषु धनुरादीनां प्राधान्यमेव श्रूयते न कुत्रापि नालिकास्त्रस्य ; अतः सुस्पष्टतयावगम्यते, यद्येतादृशं सकलायुधगर्व्वहरं किमपि पुराऽस्यास्यत् तदा निश्चितमेव तत् धनुरादीनां यशस्तिरस्कुर्व्वत् निखिलायुधशिरोमणित्वमलभिष्यतेति।

अत्राभिधीयते, सत्यमेवेदं भवितुमर्हेत् यद्येतस्य धनुर्व्वेदलब्धमान्त्रिकास्त्रेभ्यः श्रेष्ठता ज्ञायेत। न खलु आर्य्याणामस्मिन् नालिकास्त्रे तादृशी बुद्धिर्जाता। तस्मिन् समये तु नालिकास्त्रात् प्रभूतवीर्य्याणि बह्न्यस्त्राण्यासन् यान्यधिगम्य ते नालिकास्त्रं तुच्छमेव मेनिरे, अधर्मयुद्धार्थं च जज्ञिरे। निरस्तपादपदेशे एरण्डवृक्षस्येव, अन्धतमसाच्छन्ने खद्योतिकाया इव इदानीमस्य यशोविस्तार इति मन्यामहे।

यद् भवतु भूयताम्, आर्य्याः खलु कूटयुद्धव्यवहार्य्यतयाऽस्मिन् वीतश्रद्धा आसन्नित्यत्र नास्ति कोऽपि सन्देहावसरः। नालिकास्त्रन्तु आसुरिकं कूटयुद्धव्यवहार्य्यञ्चेति प्राचीनशास्त्रादवगम्यते। धर्मयुद्धतत्परा आर्य्यास्तु न कदापि कूटयुद्धेन शत्रुनिपातने सयत्ना बभूवुः। यदि च ते कदापि कार्य्यवशात् नालिकास्त्रप्रयोगपरा आसन्निति दृश्यते, तथापि न ते धनुरादिष्विवैतस्मिन् प्रणयिनो बभूवुरिति सुधीभिर्विचिन्त्यम्। दानवगुरुशुक्राचार्य्यकृतनीतिसारेऽस्य सविस्तारवर्णनदर्शनादस्त्रस्यैतस्यासुरिकत्वे न कश्चिदपि सन्देहः। महाभारतेऽपि अस्य अधर्मयुद्धव्यवहार्य्यता श्रूयते। यथा, द्रोणपर्व्वणि १८७। ८—१३।

"शुद्धात्मानः शुद्धवृत्ता राजन् स्वर्गपुरस्कृताः।
आर्य्ययुद्धमकुर्व्वन्त परस्परजिगीषवः॥
शुक्लाभिजनकर्म्माणो मतिमन्तो जनाधिपाः।
धर्म्मयुद्धमयुध्यन्त प्रेप्सन्तो गतिमुत्तमाम्॥
न तत्रासीदधर्म्मिष्ठमशस्त्रं युद्धमेव वा।
न तत्र कर्णी नालीको नालिप्तो न च वस्तकः॥
न सूची कपिशो नात्र न गवास्थि गजास्थिकः।
इषुरासीत् न संश्लिष्टो न पूतिर्न च जिह्मगः॥
ऋजून्येव विशुद्धानि सर्व्वे शस्त्राण्यधारयन्।
सुयुद्धेन परान् लोकानीप्सन्तः कीर्त्तिमेव च॥"

एतान्यालोच्य मनसि एतादृशी धारणा जायते यदार्य्याणामस्त्रैव नालिकास्त्रस्यावनतिकारणम्। परन्तु स्थिरबुद्ध्या समालोच्य वयं सकलशूरविनाशकरं निखिलशस्त्रास्त्रविज्ञानहरं भारतयुद्धमेवात्र मुख्यं कारणमिति मन्यामहे। कुरुक्षेत्रयुद्धावसानात् परं विजिगीषाभावात् का कथा नालिकास्त्रस्य तादृशप्रचण्डप्रतापं निखिलास्त्रगर्व्वहरं धनुर्व्वेदाधिगम्यमान्द्रिकास्त्रस्यापि वीर्य्यं तिरोभूतम्। अधुना पुनः कालवशात् विज्ञानशास्त्रानुशीलनदक्षाणां पाश्चात्यधीराणां बुद्धिबलेन नालिकास्त्रस्य विविधरूपेण संस्कारो जातः। न जाने कदा पुनः सात्त्विकबुद्धियोनिमान्द्रिकस्य समुन्नतिर्भविष्यति। निखिलपरिवर्त्तनपटुः कालरूपी भगवानेवात्र प्रमाणमित्यलमतिविस्तरेणेति।

श्रीनन्दलाल शर्म्मा विद्याविनोदः।

---

# पूर्व्वकालीनाः कथं दीर्घायुषः?

( पूर्व्वप्रकाशितात् परम् । )

पञ्चपञ्चकमुद्दिष्टं मनोहेतुचतुष्टयम् ।
इन्द्रियोपक्रमेऽध्याये सद्वृत्तमखिलेन च ॥
स्वस्थवृत्तं यथोद्दिष्टं यः सम्यगनुतिष्ठति ।
स समाः शतमव्याधिरायुषा न वियुज्यते ॥
नृलोकमापूरयते यशसा साधुसम्मतः ।
धर्म्मार्थावेति भूतानां बन्धुतामुपगच्छति ॥
परान् सुकृतिनो लोकान् पुण्यकर्म्मा प्रपद्यते ।
तस्माद् वृत्तमनुष्ठेयमिदं सर्व्वेण सर्व्वदा ॥
यच्चान्यदपि किञ्चित् स्यादनुक्तमिह पूजितम् ।
वृत्तं तदपि चात्रेय! सदैवाभ्यनुमन्यते ॥

**इति चरकसंहितायां इन्द्रियोपक्रमणीयनामकोऽष्टमाध्यायः ।**

"In this Lesson on the Analysis of the Senses have been indicated the five Sense and the several aggregates of five that appertain to them, the Mind, and the four (principal) causes ( of disease and its reverse ) ; and good or righteous conduct in all its details. That man who duly practises that course of good conduct which has been indicated (in this Lesson) remains hale for a hundred years and is never cut off before the allotted period of human life runs out. Honored by the righteous, such a man fills the world of men with his fame. Possessed of a righteous soul, he wins the friendship of all creatures. Of virtuous acts, such a man (when he departs from this world) attains to those regions (of felicity) hereafter that belong to the righteous. Hence, every one should always observe the course of conduct pointed out above. If there be any laudable practice that has not been mentioned in the above enumeration, that also is approved by the son of Atri."

**एवं सुश्रुत संहितादौच सदाचारस्य आयुर्वृद्धि**
**हेतुत्वमुक्तम् नेहविस्तृतभिया नोद्धृतम् ।**

सदाचारस्तु सम्यगारोग्यसाधनम्, दीर्घजीवनकारणञ्च, इति स्मृतयः वैद्यकसंहिताश्च प्रमाणं दर्शिताः। अतीवगभीरार्थत्वा-त्तावदस्य विषयस्य चोदीयस्यानया पत्रिकया सम्यक् स्पष्टीकरणं नैव सम्भाव्यते। अतः किञ्चिदुदीर्य्यते।

उक्तं श्रावणमासीयसख्यायां मानवं प्रमाणम् "आलस्यादन्न-दोषाच्चमृत्युर्व्विप्रान् जिघांसतीति" तत्रालस्यं मृत्युकारणं मृत्यु-जनकरोगकारणञ्च प्रथमं व्याख्यायते।

आलस्यन्तु तमोगुणधर्म्मः (१) तमसस्तु मारणी शक्तिः प्रसिद्धा। तमोगुणमयत्वादेव देवो हरः सर्व्वं संहरति। तमोगुणमहिम्ना आलस्य मुदेति, आलस्यान्निद्राति, निद्रया च समधिकया निश्वासदैर्घ्यात् संख्याधिक्याच्च प्राणाः क्षीयन्ते, (२) प्राणक्षये च मृत्युरुपतिष्ठते।

अपिच। साक्षान्नाभवत्वालस्यं मृत्युकारणम्, परन्तु परम्परया-वश्यमेतदङ्गीकर्त्तव्यम्। तत्रैकमुदाहृत्य दर्शयामि।

यदि कश्चिद्ब्राह्मणः आलस्यपरतन्त्रः प्रमादान् वा सन्ध्यां त्यजति, त्यजति च तदङ्गं प्राणायामम्, तदा स रोगैराक्रम्यते, म्रियते च झटिति। प्राणायामेन चाशेषदोषा दह्यन्ते वपुः पुष्णाति, रोगाश्च

---

(१) तथाच गीता। १४। ८।

"तमस्त्वज्ञानजं विद्धि मोहनं सर्व्वदेहिनाम्।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत!॥"

(२) तथाच पवनविजयस्वरोदये।

"देहाद्विनिर्गतो वायुः स्वभावाद्द्वादशाङ्गुलिः।
गायने षोड़शाङ्गुल्यो भोजने विंशति स्तथा॥
चतुर्व्विंशांगुलिः पान्थे निद्रायां त्रिंशदङ्गुलिः।
मैथुने षट्त्रिंशदुक्तं व्यायामे च ततोऽधिकम्॥
स्वभावेऽस्य गते न्यूने परमायुः प्रवर्द्धते।
आयुःक्षयोऽधिके प्रोक्तो मारुते चान्तरोद्गते॥"

विनाश्यन्ते, किमधिकं मानवा अपि देवदेहाः क्रियन्ते। कथमिति? कथ्यते, मनः प्रणिधीयताम्।

सततमेवास्मान् विहाराहारव्यपदेशेन अनुसरति व्याधिर्मृत्युश्च। भोजनद्रव्यैण सार्द्धं प्राणनाशकमपरिमितं वस्तु प्रविशत्यस्माकमन्तः। वृक्षादिभ्यः निशि निःसरति वायुविशेषो मृत्युप्रदायकः। प्रविशति च नासावर्त्मना प्राणिनामभ्यन्तरे। अतएव मनुनोक्तम्—

"रात्रौ च वृक्षमूलानि दूरतः परिवर्ज्जयेत्।" प्राचुर्य्येण वंश विटपिभ्यः तिन्तिड़ीतरुभ्यश्च स वाय्ववायुर्निःसरति। प्रत्यक्षतस्त-दवलोक्यताम् वंशतिन्तिड़ीतरुतले अमरी अपि दूर्व्वा नाङ्कुरायते, तत्रत्या मृदश्च अम्लरूपेण तेजसा भृशं दह्यन्ते इति। सुतरां गृह-स्थानामस्माकं पर्य्यटनस्यापरिहार्य्यतया तथाविधदुष्टवायुः प्रवेष्टु-मभ्यन्तरे सम्भवत्येव। एवं विषाक्ताः पार्थिवादीनामपि परमाणव स्तथा प्रविशन्ति प्रश्वासाकर्षणेनास्माकमन्तः।

एवं प्रतिक्षणमाहारान्ते चास्माकं धावतामितस्ततः भुक्तान्नाना मसमीभावाद्रोगा उत्पद्यन्ते। किन्तु यथाशास्त्रं प्राणायाममाच-रतो न ते दोषा वाधन्ते। तथाहि। प्रणायामेषु गोमयाद्युपलिप्ते धूपादिपरिपूते स्थाने वसन्तः पूरकेण वहिःस्थितं विशुद्धमारुत-माकर्षन्ति। सचाकृष्टवायुः कुम्भकेन कुतोऽपि निर्गममलभमानः शरीराभ्यन्तरे परिभ्रमन् अवकासानुसन्धायी तावत्सु रोमादीनां छिद्रेषु उपतिष्ठते। तत्रापि निर्गमनमार्गमप्राप्तः वलाद्दूषितवायु-माकृष्य रेचकेन वहिः क्षिपति। एवं पुनःपुनः पूरककुम्भक-रेचकयोगात् प्राणायामः विषमीकृतभुक्तान्नञ्च समीकरोति, समा-कृष्टविषाक्तपरमाणूनपि मलीभूतान् निःसारयति। प्राणायामे ऋजूपवेशनत्वाद्वायवः निर्व्वाधं प्रवहन्तः रक्तमांसवसामज्जापाका-शयादीनि स्वस्वस्थाने सन्निवेशयन्ते, यथा सम्मार्ज्जनी आघातप्रति-घातेन गृहोदरं विमलीकरोति। तथा प्राणायामोऽपि देहाभ्यन्तरं

संशोध्य दूषितवायूवादीन् देहान्तर्म्मलान् दवयन्तः (३) नवद्वारेभ्य स्तान् निःसारयन्ति ।

## तथा च सावित्रीप्राणायाम माहात्म्यम् ब्राह्मणसर्व्वस्वे ।

## तत्राग्निपुराणे गायत्रीं प्रति ब्रह्मवाक्यम् ।

"कुर्व्वन्तोऽपीह पापानि ये त्वां ध्यायन्ति पावनि ! ।
उभे सन्ध्ये न तेषां हि विद्यते भुवि पातकम् ॥
चिः पठेदायतप्राणः प्राणायामेन यो द्विजः ।
वर्त्तते न स लिप्येत पातकैरुपपातकैः ॥"

वृहद्विष्णुः । प्राणायामान् द्विजः कुर्य्यात् सर्व्वपापापनुत्तये ।
दह्यन्ते सर्व्वपापानि प्राणायामैर्द्विजस्य तु ॥

## विष्णुधर्म्माग्निपुराणयोः ।

"सर्व्वदोषहरं प्रोक्तं प्राणायामं द्विजन्मनाम् ।
ततस्त्वप्यधिकं नास्ति तपः परमपावनम् ॥

अत्रिः । कर्म्मणा मनसा वाचा यदह्ना कुरुते त्वघम् ।
आसीनः पश्चिमां सन्ध्यां प्राणायामैस्तु शुध्यति ॥

अग्निपुराणम् । प्राणायामत्रयं कृत्वा प्राणायामैस्त्रिभिर्निशि ।
अहोरात्रकृतात् पापात् मुच्यते नात्र संशयः ॥

वशिष्ठः । प्राणायामान् धारयेत्त्रीन् यथाविधमतन्द्रितः ।
अहोरात्रकृतं पापं तत्क्षणादेव नश्यति ।
कर्म्मणा मनसा वाचा यदह्ना कृतमेनसम् ।
आसीनः पश्चिमां सन्ध्यां प्राणायामैर्व्यपोहति ॥
कर्म्मणा मनसा वाचा यद्रात्र्या कृतमेनसः ।
उत्तिष्ठन् पूर्व्वसन्ध्यायां प्राणायामैर्व्यपोहति ॥

वृद्धापस्तम्बः । पूर्व्वमुक्तेषु पापेषु तथान्येष्वपि सर्व्वशः ।
प्राणायामास्त्रयोऽभ्यस्ताः सूर्य्यस्योदयनं प्रति ॥
जायन्ते तद्विनाशाय तमसामिव भास्करः ।
सूर्य्यस्योदयनं प्राप्य निर्म्मला धूतकल्मषाः ॥

---

(३) दूरं कुर्व्वन्ति इत्यर्थः ।

भवन्ति भास्कराकारा विधूमा इव पावकाः ।

योगियाज्ञवल्क्यः । यदङ्गा कुरुते पापं कर्म्मणा मनसा गिरा ॥

त्रैकाल्यमन्ध्याकरणात् प्राणायामैर्व्यपोहति ।

बृहस्पतिः । प्राणायामैर्द्दहेद्दोषान् मनोवाग्देहसम्भवान् ॥

## प्राणायामानुवृत्तौ बौधायनः ।

एतदाद्यं तपः श्रेष्ठमेतद्धर्म्मस्य लक्षणम् ।

सर्व्वदोषोपकारार्थमेतदेव विशिष्यते ॥

अत्रिवशिष्ठौ । आवर्त्तयेत् सदा युक्तः प्राणायामं पुनः पुनः ।

आकेशाग्रान्नखाग्राच्च तपस्तप्यत उत्तमम् ॥

## विष्णुधर्म्मोत्तराग्निपुराणम् ।

आकेशाग्रादानखाग्रात् तपस्तप्यन् सुदारुणम् ।

आत्मानं शोधयेद्द यस्तु प्राणायामैः पुनः पुनः ॥

मनुः । दह्यन्ते ध्मायमानानां धातूनां हि यथा मलाः ।

तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥

प्राणायामैर्द्दहेद्दोषान् प्राणायामः परन्तपः ॥

बृहद्यमः । यथा हि शैलधातूनां ध्मायतां नश्यते रजः ।

इन्द्रियाणां तथा दोषान् प्राणायामैश्च निर्द्दहेत् ॥

बृहस्पतिः । ध्मायमानं यथा दह्येत् धातूनां संभृतं मलम् ।

तथेन्द्रियकृतो दोषः प्राणायामेन दह्यते ॥

योगियाज्ञवल्क्यः । दह्यन्ते ध्मायमानानां धातूनां हि यथामलाः ।

तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात् ॥ तथा—

यथा पर्व्वतधातूनां दोषान् दहति पावकः ।

एवमन्तर्गतञ्चैनः प्राणायामेन दह्यते ॥

अत्रिवशिष्ठौ । निरोधाज्जायते वायुर्वायोरग्निः प्रजायते ।

अग्ने रापो व्यजायन्त तैरन्तः शुध्यते त्रिभिः ॥

## विष्णुधर्म्मोत्तराग्निपुराणे ।

निरोधाज्जायते वायुस्तस्मादग्निस्ततो जलम् ।

त्रिभिः शरीरं सकलं प्राणायामैर्विशुध्यति ॥

योगियाज्ञवल्क्यः । तथा निरोधसंयोगाद्दैवतात्रयचिन्तनात् ।
अग्नेर्वायोरपायोगादात्मा शुध्येत वै त्रिभिः ॥
प्राणायामा ब्राह्मणस्य त्रयोऽपि विधिवत् कृताः ।
व्याहृतिप्रणवैर्युक्ता विज्ञेयं परमं तपः ॥

### विष्णुधर्म्मोत्तराग्निपुराणञ्च ।

प्राणसन्धारणं नाम कुशाग्रच्यूतविन्दुना ।
यः कुर्य्यादम्भसा राजन् प्राणायामश्च तत्समः ॥

### वृहद्विष्णु वौधायन वशिष्ठात्र्यग्निपुराण शङ्खयोगि याज्ञवल्क्य वृद्धापस्तम्बाः ।

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥
योगियाज्ञवल्क्यः । पूरके विष्णुसायुज्यं कुम्भके ब्रह्मणोऽन्तिकम् ।
रेचकेन तृतीयन्तु प्राप्नुयादीश्वरम्पदम् ॥„

### अपिच घेरण्डसंहितायाम् ।

क्रमेण सेव्यमानोऽसौ नयते यत्र चेच्छति ।
प्राणायामेन सिद्धेन सर्व्वव्याधिक्षयी भवेत् ॥
अयुक्ताभ्यासयोगेन सर्व्वव्याधिसमुद्भवः ।
हिक्का श्वासश्च कासश्च शिरःकर्णाक्षिवेदनाः ।
भवन्ति विविधा रोगा पवनस्य व्यतिक्रमात् ॥"

अत उक्तं आलस्यान्मृत्युरिति । शास्त्रोक्तसन्ध्याद्यनुष्ठानेन मारणीशक्तिमत्तमोगुणो निराक्रियते, जीवनीं शक्तिञ्च दधत् सत्त्वं गुणः सुतरामाविष्क्रियते, तेन च चिराय सुखी भवेत् दीर्घञ्च निरामयो जीवेत् ।

सन्ध्यादीनां प्रत्येकशो माहात्म्यं युक्तिश्च नोच्यते विस्तरभयात् पारत्रिक फलातिशयश्च ।

( क्रमशः । )

# महाप्रभुश्रीगौराङ्गदेवस्य जीवनचरितम् ।

( पूर्व्वप्रकाशितात् परम् । )

तत्र प्रथमतृतीयचरणयोरविमृष्टविधेयांशदोषः । चतुर्थचरणे विरुद्धमतिदोषः समाप्तपुनरात्तत्वदोषश्च । तथा द्वितीयचरणे भग्नप्रक्रमदोषः । एते पञ्च दोषा दृश्यन्ते । गुणा अपि अनुप्रासादयः पञ्चैव । तच्छ्रुत्वा दिग्विजयी तत्तद्दोषवारणार्थं बहुतरं प्रयासमकरोत्, परन्तु सर्व्वे एव प्रयासा भस्मनि हुता इव निष्फला जाताः । स तदा युगपद्दुःखितो विस्मितश्च बभूव । पराजयात् दुःखम्, बालकवैयाकरणादिति विस्मयश्च । श्रीगौराङ्गस्तु तस्य मनोदुःखं ज्ञात्वा विनयवचनैस्तं सान्त्वयामास । स तु तदा तदाचरणेन कथञ्चित् सुस्थः सन् स्वावासमागत्य निशायां विविधैः स्तवैर्देवीं सरस्वतीं तुष्टाव । तैः सन्तुष्टा देवी स्वप्ने दिग्विजयिनमुवाच तात ! शोकं मा कुरु । त्वं येन पराजितः स तु नारायणऽस्मोकान्ततः । तस्मिन् मानुषबुद्धिं त्यज । एवमुक्त्वान्तर्हितायां देव्यां दिग्विजयी स्वापादुत्थितः श्रीगौराङ्गदेवस्य गृहं गत्वा तदीयचरणं शरणमियाय । श्रीगौराङ्गोऽपि तस्य तादृशीं कातरतां दृष्ट्वा तं स्वकीयत्वेन स्वीचकार । दिग्विजयी तस्मिन्नेव मुहूर्त्ते सर्व्वतः सङ्गं विसृज्य श्रीहरेर्नामानि अनुस्मरन् प्रवव्राज ।

यशोवृद्धिकाले गाम्भीर्य्यधारणं सर्व्वलोकप्रसिद्धम् । श्रीगौराङ्गे तु तद्वैपरीत्यमदृश्यत । स तु दिग्विजयिनं विजित्यापि चाञ्चल्यं नात्यजत् । एकदा श्रीगौराङ्गचन्द्रः शिष्यवर्गपरिवृतः नगरभ्रमणार्थं वहिर्जगाम । अलौकिकरूपमाधुर्य्यसम्पन्नस्य तस्य दर्शनेन चित्तविनोदनाय पार्श्वमुपागतैर्जनैर्वर्त्मनि सङ्कुलेऽपि स तेषु दृष्टिदानमकुर्व्वन् वभ्राम । एतस्मिन्नन्तरे तदीयपितृसुहृत् वैष्णवाग्रगण्यः श्रीश्रीवासनामा कश्चिद्द्विजवरस्तत्सान्तिकमागत्य उवाच

उद्धतशिरोमणे! कुत्र गच्छसीति। स तु श्रीवासपण्डितं प्रणम्य क्षणमतिष्ठत्। श्रीवासपण्डितः अदत्तप्रत्युत्तरं तं तथाभूतं दृष्ट्वा साक्षेपमाह तात! विवादकरीं निष्फलां विद्यां विहाय भक्तिप्रदां पैत्रिकीं विद्यामनुशीलय। तयैव जीवनं सार्थकं भविष्यतीति जानीहि। तच्छ्रुत्वा श्रीगौराङ्गः ईषद्विहस्योवाच पण्डितवर! यद्भवतोदितं तदेव मे मनोगतम्। क्षणं तिष्ठन्तु भवन्तः। अहमचिरेणैव ईदृशो वैष्णवो भविष्यामि यद्भवपाद्मसुख्या वैष्णवा मम द्वारदेशमागमिष्यन्ति। स तु एतावदुक्त्वा उच्चैर्जहास। श्रीवासोऽपि कीदृशं चपलमहमुपदेष्टुं प्रवृत्त इति उक्त्वा विहस्य च स्वाभिलषितां दिशं प्रस्थितः।

गुरुजनेषु श्रीगौराङ्गस्यैवं चापल्यं यद्यपि च सन्तोषकरमासीत् किन्तु अनेनैव स सर्व्वेषां चित्तमहरत्। तस्य चापल्येन न कोऽपि दुःखं प्राप, परन्तु सर्व्वे एव तत् सुखकरं मेनिरे। सर्व्वे जनास्तस्मै सर्व्वस्वार्पणे समुद्यता आसन्। तं दृष्ट्वा सर्व्वे जनाः स्वस्ववृत्तिं विस्मृत्य तमेव मनसि दध्युरेव।

एवं सर्व्वजनमानसमोहनप्रवृत्ते तु श्रीगौराङ्गे वत्सरद्वयपरिमितः कालोऽतिक्रान्तः। एतस्यैवान्तरे श्रीगौराङ्गः पुनरेव दारपरिग्रहं कृतवान्। राजपण्डितस्य मिश्रसनातनस्य कन्या श्रीविष्णुप्रिया तस्य द्वितीया पत्नी आसीत्। तथाहि। एकदा स्नानान्ते समीपगतां प्रणतिपरायणां विष्णुप्रियां दृष्ट्वा शचीदेवी तां पुत्रवधूं कृत्वा स्वगृहमानेतुमियेष। काशीमिश्रञ्च तद्व्यापारसम्पादनार्थं नियोजयामास। सनातनमिश्रः सादरं स्वमनोरथानुकूलां शचीदेव्याः प्रार्थनां स्वीकृत्य श्रीगौराङ्गाय कन्यां सम्प्रददौ। श्रीगौराङ्गचन्द्रः दारपरिग्रहानन्तरं पितृकार्य्यकरणार्थं कतिपयैरात्मीयैः सह गयाक्षेत्रं जगाम।

(क्रमशः।)

---

# विश्वविद्यालयप्रश्नास्तदुत्तरादर्शाश्च ।

## मुम्बयी-विश्वविद्यालयस्य ।

प्रवेशिकाप्रश्नानामिव चन्द्रिकायां पुनः पुनरवतारणात् कृतप्रवेशाः अनुग्राहका नः विरङ्क्ष्यन्तीति शङ्कया संख्यायामस्यां मुम्बयी प्रदेशीयाः पूर्व्ववर्त्तिपरीक्षा प्रश्नाः उद्धृताः, प्रदर्शिता च तेषामुत्तरण-रीतिः । तत्र च वङ्गीयछात्रानामनुपयोगिनः नाटकप्रश्नान् परित्यज्य सर्व्वोचितान् रघुवंशीयप्रश्नानवतारयामः ।

November 1892. Sanskrit. Section II.

Question.

I (a) Translate into English :—

( १ ) तव मन्त्रकृतो मन्त्रैर्दूरात् प्रशमितारिभिः ।
प्रत्यादिश्यन्त इव मे दृष्टलक्ष्यभिदः शराः ॥

( २ ) पुरुषायुषजीविन्यो निरातङ्का निरीतयः ।
यन्मदीयाः प्रजास्तस्य हेतुस्त्वद्ब्रह्मवर्च्चसम् ॥

( ३ ) पृक्तस्तुषारैर्गिरिनिर्झराणां अनोकहाकम्पितपुष्पगन्धी ।
तमातपक्लान्तमनातपत्रं आचारपूतं पवनः सिषेवे ॥

( ४ ) इक्षुच्छायनिषादिन्यस्तस्य गोप्तुर्गुणोदयम् ।
आकुमारकथोद्घातं शालिगोप्यो जगुर्यशः ॥

( ५ ) निःशेष विक्षालितधातुनापि वप्रक्रियामृक्षवतस्तटेषु ।
नीलोर्द्धरेखा शवलेन शंसन् दन्तद्वयेनाश्म विकुण्ठितेन ॥

( ६ ) संहार विक्षेपलघुक्रियेण हस्तेन तीराभिमुखः सशब्दम् ।
वभौ स भिन्दन् वृहतस्तरङ्गान् वार्य्यर्गलाभङ्ग इव प्रवृत्तः ।

(b) Name and dissolve the compounds underline.

*Answer.*

(a) (I) By the incantations of thee, the auther of spells, which subdue my foes from a distance, my arrows which can hit (only) visible marks are, as it were, driven off the field.

(2) That my subjects live out the full term of human life,that they are free from fear and exempted from the six scourges, is owing to thy godly spiritual power.

(3) The breeze charged with particles of spray from mountain brooklets, and perfumed by flowers of trees gently shaken by it, refreshed the king,sanctified by the observation of sacred customs, who had no umbrella (with him) and was (hence) oppressed by the heat of the sun.

(4) The women who were looking after the rice crops reposed under the shade of sugercane plants, and sang the glorious deed of him, their protector, whose exploits were sung even by little boys. (or beginning from his very child-hood).

(5) Although the tinges received from contact with the minerals had been completely washed off, his tusks still seemed variegated with blue sripes running up vertically and they were also blunted by striking against rocks, so that it was evident that the elephant had been plying his batteriug tricks on the valley of mount Rikshavan. ( Mukherji )

(6) He (the elephant) with his face turned towards the bank and with noise breaking through the

large waves by his trunk, quick in the action of expansion and contraction, appeared as if engaged in bursting open the bolts of the (Aja's) stable. ( Vidyaratna ).

(b) मन्त्रान् कृतवानिति मन्त्रशब्दात् करोतेः अतीतकाले क्विप्। "सुकर्म्मपापमन्त्रपुण्येषु कृञः" इति सूत्रात्। अत्र उपपदसमासः।

दृष्टं लक्ष्यं दृष्टलक्ष्यं कर्म्मधारयसमासः दृष्टलक्ष्यं भिन्दन्तीति क्विप् प्रत्ययः। उपपद समासः।

पुरुषस्य आयुः पुरुषायुषं अचतुरादिसूत्रेण अच् प्रत्ययान्तो निपातः। षष्ठीतत्पुरुषसमासः।

पुरुषायुष शब्दात् जीवधातोर्णिनि प्रत्ययः। अत्राप्युपपद समासः।

निर्गताः ईतयो याभ्यस्ताः निरीतयः। वहुव्रीहि समासः। ईषत् कम्पितानीति आकम्पितानि आङीषदर्थे इति तत्पुरुषः। आकम्पितानि पुष्पाणि आकम्पितपुष्पाणि इति कर्म्मधारयः। अनसः शकटस्य अकः गतिः अनोकः षष्ठी तत्पुरुषः, तं घ्नन्तीति अनोकहाः उपपदसमासः। अनोकहानां आकम्पितपुष्पाणि अनोकहाकम्पितपुष्पाणि तेषां गन्धः अनोकहाकम्पितपुष्पगन्धः उभयत्रापि षष्ठी समासः। अतः समासो नास्ति तद्धित स्तु इन् प्रत्ययः।

इक्षूणां छाया इक्षुच्छायम्। "छाया वाहुल्ये" इति नपुंसकत्वं। तत्र निषीदन्तीति तथोक्ताः नि पूर्व्वात् सीदते र्णिनिः। अत्रापि उपपद समासः। कुमारादारभ्य आकुमारं अव्ययीभावः। कथायाः उद्घातः कथोद्घातः। षष्ठी समासः। आकुमारं कथोद्घातः यस्य स आकुमारकथोद्घात

स्तं ( वहुव्रीहि समास: ) वालकैरपि स्तूयमानमित्यर्थ । यद्वा कुमारस्य कथा कुमारकथा षष्ठी समास:। कुमार कथाया: आरभ्य आकुमारकथं आङ: अभिविध्यर्थे अव्ययीभाव:। आकुमारकथं उद्घात: (प्रस्तावो) यत्र तत् तथोक्तम्। वहुव्रीहि समास:।

Question.

2. Explain giving the context.

(*a*) हेम्न: संलक्ष्यते ह्यग्नौ विशुद्धि: श्यामिकापि वा।

(*b*) आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रित:।

(*c*) सहस्र गुणमुत्स्रष्टुमादत्ते हि रसं रवि:।

(*d*) शस्त्रेण रक्ष्यं यदशक्यरक्षं न तद्यश: शस्त्रभृतां क्षिणोति।

(*e*) क्रिया हि वस्तूपहिता प्रसीदति।

(*f*) पदं हि सर्व्वत्र गुणैर्निधीयते।

(*g*) शैत्यं हि यत् सा प्रकृतिर्जलस्य।

*Answer.*

(*a*) सतां समीपे सप्रवन्ध परीक्षा प्रार्थनां उपमया अलंकुर्व्वन्नाह कवि: यथा कनकस्य निर्दोषस्वरूपत्वम्, लोहान्तरसंसर्गात्मको वा दोष: अग्नौ दहनानन्तरमेव प्रतीयते तथा ममापि काव्यमिदं गुणयुतं दोषपूर्णं वा तत् विद्वज्जनानां विचारानन्तरमेव प्रतिभास्यति।

(*b*) वीरोचितं देहोत्कर्षं राज्ञ: व्यूढोरस्केत्यादिना वर्णयन्नुत्प्रेक्षते कवि: मन्ये क्षत्रियधर्म्म: सर्व्वलोकरक्षणक्षमां मानुषीं तनुं परिगृह्य भूमौ दिलीपरूपेणावर्त्तत।

(*c*) त्यागशीलस्य राज्ञ: वलिग्रहणस्य सार्थकतां उपमया प्रदर्शयन्नाह भानुर्यथा स्वांशुमालाभि: धरण्या: जलं गृह्णाति, काले च पुन: सहस्रगुणीकृतस्य तद्वारिण:

प्रत्यर्पणेन लोकान् जीवयति स राजा तथा गृहीतकरं विविधसम्पद्रूपेण प्रकृतिभ्यः प्रतियच्छति स्म।

(*d*) नन्दिनीमायाप्रभवो मृगेन्द्रः तस्या अनुचरं दीलिपं स्वकार्य्यान्निवर्त्तयन् क्षत्रियधर्म्ममुपदिशति धेनुमिमां विहाय गुरुसमीपं गच्छ, लज्जां मा कुरु। यथासाध्यं चेष्टितं त्वया शस्त्रादिभिः, परन्तु प्रत्यक्षीकृतमेव यदेषा अस्त्रवलेन मत्तः रक्षितुमशक्या। अस्त्रमेव क्षत्रियाणां वलं। यदि रक्षणमस्याः अस्त्रवलादतीतमेव, तदा रक्षणासामर्थ्यादस्त्रमात्रधारिणस्ते सम्मानस्य का हानिः? अतएव किं क्रियते, प्रतिगच्छ, नात्र कोपुत्रपाय इति भावः।

(*e*) रघोर्गुरूणामवन्ध्ययत्नत्वं कथयति। शिक्षा योग्यपात्रे प्रयुक्ता एव फलति। क्रियायाः शिक्षार्थे यादवः "क्रिया तु निष्कृतौ शिक्षा चिकित्सोपाय कर्म्मसु" इति।

(*f*) शत्रोरपि वासवस्य रघोरस्त्रचालनदर्शनात् कथं सन्तोष इत्याह—गुणैः सर्व्वत्र शत्रुमित्रोदासीनेषु पदं अंघ्रिः निधीयते, सर्व्वत्र संक्रम्यते इत्यर्थः। गुणवन्तं शत्रवोपि आद्रियन्ते इति सरलार्थः।

(*g*) मतङ्गस्य मुनेः शपनं अनुनयानन्तरं मृदुतागमनञ्च वर्णयतुपमया कौत्सः रघुसमीपे—यथा जलं प्रकृत्या शीतलं घटना वशात् यदि कदापि उष्णत्वं व्रजति, तदा परक्षणमेव शीतलायते, तथा मुनयोऽपि प्रकृत्या शीतलस्वभावाः, यदि कदापि कारणवशात् कुप्यन्ति तदा परक्षणमेव संयमं लभन्ते।

श्रीज्ञानशरणशर्म्म चक्रवर्त्ती।

---

श्रीश्रीदुर्गा।

शरणम्।

# संस्कृतचन्द्रिका।

(१८१५ शाक पौषमासस्य।)

श्रीश्रीगणेशाय नमः।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव।

मायावलम्बते सेयमम्बा श्रीशिवसुन्दरी॥

## उद्भट-श्लोकाः।

"खरतरशरवर-हतदशवदन! खमच! रनगधर! फणधरशयन!।
जगदघमपहर भवभयशमन! परपदलयकर! कमलजनयन!" ४२॥

"सिक्ताव्यो यदि मारवस्तरुरयं पायोद! पाथोलवैः
अव्याजं परिषिञ्च किञ्चिरयसे कालः परिक्रामति।
जीर्णे मूलकुले दले च गलिते शीर्णे तथा वल्कले
किं वास्योपकरिष्यति प्रबहुला धारापि वारां तव॥" ४३॥

"रत्नाकरे च शयनं गृहिणी च पद्मा, किं देयमस्ति भवते जगदीश्वराय।
राधागृहीतमनसो मनसोऽस्ति दैन्यम्, दत्तं मया निजमनस्तदिदं गृहाण॥" ४४॥

"कृष्णत्वदीयपदपङ्कजपञ्जरान्ते, अद्यैव मे विशतु मानस-राजहंसः।
प्राणप्रयाणसमये कफवातपित्तैः, कण्ठावरोधनविधौ स्मरणं कुतस्ते॥" ४५॥

"कुचौ लेभे हारं घनकठिन पीनोन्नततया,
नितम्बो विस्तारात् कनकमयकाञ्चीमलभत।
तयोर्मध्यो दीनो दुकुलनिकरैर्बन्धनसहो,
न कोऽपि क्षीणानां जगति कुरुते सम्भ्रमपदम्॥" ४६॥

"कमलिनी मलिनी दिवसात्यये, शशिकला विकला च्चणदाच्चये।
इति विधिर्व्विदधे प्रमदासुखम् भवति विज्ञतमः क्रमशो जनः॥" ४७॥

"भवनमिव मदीयं निर्ज्जनः पान्थ! पन्थाः, कुसुमशर इवास्मिन् दस्यवो दुर्निवाराः।
दयित इव दिगन्तं प्राप्तवानेष भानुः, भुवनमदन! गन्तुं नानुमन्तुं समर्थो॥"

# संसर्गः ।

"संसर्गजा दोषागुणा भवन्ति ।"

अनेकेषामेकत्र सहावासः, सहसंलापः सहाचारः सहव्यवहारः सहगमनं सहशयनादिकं संसर्गः । स्पर्शोपलस्पर्शेन अयोऽपि सुवर्णं भवेत् । अविरलशैत्यशीला शिलापि तपनतेजसा दाहिकां शक्तिमनुकरोति । सर्व्वत्र सुलभः काचमणिरपि काञ्चनसम्पर्केण अनुत्तमामनुपमां मारकतिं कान्तिं लभते । अश्रद्धेयो लघुकलेवरः कीटोऽपि कुसुमसहवासेन सतामप्यधितिष्ठति शिरांसि । कुलीनोऽपि मूढ़तया नीचसङ्गेन नीच इव प्रतिभाति । अतिमधुरमपि सहकारफलं दिनमेकं द्वयं वा जलमग्नञ्चेदमधुरमप्रीतिकरञ्च भवेत् । कस्यचित् प्रियतमस्य प्रणयमभीप्सुः प्रियसङ्गमोचितपरिच्छदाय स्वयमक्षमोऽपि पितृधनेन प्रथमं चर्म्मपादुकायुगलं तत आतपत्रं ततश्च शीर्षणत्रं तस्माद्वसनकञ्चुकादिकञ्च संगृह्णाति । अनलोऽनिलसंसर्गेण द्विगुणतरं विवर्द्धते । पुनः सलिलयोगात् स निर्व्वाणतां याति । चन्दनचारुगन्धेन सुरभितमपि काननं दावानलसङ्गेन भस्मीभवति । शीतलमपि जलमनलसंसर्गेण उष्णोष्णं सत् परं समीरणस्पर्शेण प्रकृतिस्थं भवति । करिकुम्भजो मणिः शाखामृगगृहीतः फलानुमानेन चर्व्वित्वा नीरसतया पुनर्निःक्षिप्यते विजने वने । किन्तु मृगयासक्तेन नरपतिना स लब्धः किरीटमध्यगतो भवति । असामान्यप्रीतिकरं यदेव नलिनं तीव्रेण नलिनीकान्तस्य करेण समागते वसन्ते सत्पुत्रः कुलमिवसरोवरं विकाशयति, पुनः समायाते हेमन्ते शीतलेनापि सुधाकरकिरणेन मृतपुत्रतयेव तदेव नलिनं सरोवरं नेत्रविकलं विदधाति ।

एकमेव सलिलं सर्कराविमिश्रं मधुरम् तिन्तिड़ीसमेतञ्चेदम्लम् श्वेतमपि लोहितविमिश्रं लोहितम्, एवं बहुरूपमिव संसर्गगुणेन भवेत् । तथाहि—

कस्मिंश्चिद्गहने अचिरप्रसूतमजातच्छदं मातापितृहीनं शुकशिशुयुगलमासीत्। तच्च केवलमविरतं कुलाये लुठन् आत्मनो भागधेयं तिरस्कुर्वदिव चुकूज। ततश्चाकस्मादागतेन केनचित् किरातसुतेन एकतरो निजगृहं निन्ये, अपरश्च सोदरेणापि विहीनं दैवमात्रसहायं शुकतनयं सहजकरुणः कश्चिन्मुनिकुमारो निजभवनमनयत्। चण्डालालयगतः शुकः निरन्तरमपूतां अश्लीलगर्भां अश्राव्यां चाण्डालिकीं वाचं वाचयति। मुनिकुमारपालितः शुकः मुनिमुखनिःसृतां श्रोतव्यां दैवीं वाचं परिचिनोति।

अथैकस्मिन्नहनि मुनिगणैः स्नानार्थं नीतः शुकसुतः कस्याश्चित् पुण्यसलिलया नद्यास्तीरमध्यास्ते। निषादनन्दनस्य तस्यैव पुण्यदेशस्य उपकूलं समासन्नानं स्वगृहपोषितं तं शुकशावकं संस्थाप्य स्नातुमुपचक्रमे। ततः स निषादनन्दनं स्वाभीष्टदेशं गन्तुं "अरे श्यालक! उत्तिष्ठ उत्तिष्ठ गृहं चल" इत्यादि गर्हितवच उवाच।

इतश्च शुकमवगाहयितुं प्रवृत्तेषु मुनिकदम्बकेषु स आह—

मातर्गङ्गे प्रसीद त्वं त्राहि मां भवसङ्कटात्।
महानलविनिर्व्वाणं कः कुर्य्याद्वारिणा विना॥

ततो मुनयः परस्परं विरुद्धवादिनोः समानवयोरूपयोस्तयोः संस्कृतं ग्राम्यमपि भाषणमाकर्ण्य विस्मिताः परस्परं ददृशुः इतरेतरं निजगदुश्च। अहो किमिदं विधिविलसितम्। अनयोः समानं चरणम्, समानं नयनम्, समाना आकृतिः समाना जातिः समं वयः समश्च च्छदः। मन्यामहे एकजनीजठरजातमिवद्वयम्। किन्तु अयमेव भेदः यदेकस्य वहुलकलुषोपेतमम् साधुविगर्हितमश्रोतव्यं वचः, अपरस्य तु देवनामाङ्कितं सारमध्यम् अलौकिकमिव श्रूयते। अतर्कितमागतस्य अदृष्टपूर्व्वरूपस्य कस्यचिदागन्तुकस्य इयं प्रतीतिः यद्द्वयमिदं भिन्नजातिकमिति। अस्माकञ्च महान् सन्देहराशिरुपागतः। तच्छ्रुत्वा मुनिपालितः शुक आह भोभोस्तपस्विनः!

अज्ञानोपहता मादृशा नाम पामरा जन्तवः केवलं चर्म्मचक्षुषा पश्यन्ति, किन्तु अशेषज्ञानराशीनां साक्षान्मूर्त्तय इव भवन्तः तपसा वशीकृतेश्वरः प्रत्यक्षीकृतत्रिलोकीलोकवृत्तान्ता ज्ञाननेत्रेण निखिलं निमेषेणैव जानीथ। तत्कथमावयोः सन्दिहाना यूयम्? श्रूयतां सकल एव वृत्तान्तो भवद्भिः।

"माताप्येका पिताप्येको मम तस्य च पक्षिणः।
अहं मुनिभिरानीतः स च नीतो गवाशनैः॥
अहं मुनीनां वचनं शृणोमि गवाशनानां स शृणोति वाक्यम्।
न तस्य दोषो न च मे गुणो वा संसर्गजा दोष गुणा भवन्ति॥" इति।

श्रीद्वारिकानाथ काव्यतीर्थः।
ढाका, मालखानगर चतुष्पाठी।

---

## महाप्रभुश्रीगौराङ्गदेवस्य जीवनचरितम्।

( पूर्व्वप्रकाशितात् परम्। )

एकदा पिण्डदानानन्तरं श्रीगौराङ्गः स्वकीयमावासमागत्य रन्धनादिव्यापारं परिसमाप्य भोजनार्थमुद्यते पूर्व्वोक्तः ईश्वरपुरी तत्र जगाम अन्नं ययाच च। श्रीगौराङ्गः तं भोजयित्वा सुखी बभूव। अतःपरं कानिचित् दिनानि स ईश्वरपुरिणा सह न्यवसत्, तस्मादेव दीक्षामन्त्रं जग्राह च। ततः स सन्न्यासी ईश्वरपुरी कुत्र गतः इति न विदितमस्ति।

श्रीगौराङ्गः सत्वरमेव गयाक्षेत्रात् गृहं प्रत्याजगाम। गृहागमनावधि तस्य प्रकृतेः परिवर्त्तनं व्यदृश्यत। न पुनः स पूर्व्ववत् शास्त्रालोचनं करोति स्म। सदा श्रीभगवद्गुणानुकीर्त्तने निरतो बभूव। श्रीवासादिवैष्णवाः श्रीगौराङ्गं तादृशभावसमन्वितं समालोक्य हृष्टा आसन्। लोकाश्च स्वस्वज्ञानानुरूपं वक्तुं प्रवृत्ताः।

केचित् तं वायुरोगग्रस्तं बुबुधिरे, केचित् तं प्रवृद्धभक्तिं महापुरुषं मेनिरे च। क्रमेण वैष्णवास्तं तथाभूतं विदित्वा तेन सह श्रीवास-पण्डितालये सङ्कीर्त्तनसुखमनुभवितुं मनश्चक्रिरे। सोऽपि तदेव साधु मेने। बहवः सङ्कीर्त्तनरसामोदिनो भक्तास्तत्रागत्य सङ्कीर्त्तन-सम्प्रदायभुक्ता बभूवुः। ते सर्व्वे मिलित्वा निशायां निशान्तरं सङ्कीर्त्तनं कुर्व्वन्ति स्म।

एवं गच्छता कालेन श्रीगौराङ्गस्य सङ्कीर्त्तनं नवद्वीपवासिनां समालोचनविषयं जातम्। केचित् तत् तस्य धर्म्महानिकरं दुष्कर्म्म मत्त्वा तन्निवारणार्थं यवनराजाय निवेदयामासुः। श्रीगौराङ्गप्रिय-जनस्तदाकर्ण्य भीता बभूवुः। स तु तेषां भयं विदित्वा तानाश्वा-सयितुं स्वस्यैश्वर्य्यं प्रकाशितवान् इत्यस्ति कथा। सा चेयं—श्रीगौ-राङ्गः निजजनेषु कस्मैचिन्मत्स्यरूपं कस्मैचित् कूर्म्मरूपं कस्मैचिद् वराहरूपं कस्मैचित् तेजोमयं ब्रह्मरूपं प्रादर्शयत्। ते हि तत्तद्वि-लोक्य विगतभयमोहाः सन्तः पुनरपि द्विगुणतरोत्साहेन सङ्कीर्त्तने समासक्ताः।

अस्मिन्नेव समये श्रीनित्यानन्दावधूतः नवद्वीपमाजगाम। स तु एकचक्रनामकग्रामनिवासिनः कस्यचित् विप्रस्य तनयः। एकदा कश्चित् सन्न्यासी नित्यानन्दपितुर्गृहमागत्य तं ययाचे। स तु अतिथिवत्सलः धर्म्मात्मा तस्मै याचमानाय सन्न्यासिने स्वपुत्त्रं ददौ। अतएव श्रीनित्यानन्दः बाल एव सन्न्यासी अभवत्। स तु तेन सन्न्यासिना सह नानादेशं भ्रमित्वान्ते श्रीवृन्दावनं गतवान्। श्रीवृन्दावनन्तु तदा नेष्टश्रमासीत्। तीर्थं विलुप्तम् तत्तु केवलं वन-मेव तदा जातम्। श्रीनित्यानन्दस्तत्र स्थित एव श्रीनवद्वीपे श्रीगौ-राङ्गः समजनीति श्रुत्वा तत्सन्दर्शनार्थमत्रागतः।

श्रीमन्नित्यानन्दावधूतसन्न्यासी श्रीनवद्वीपमागत्य नन्दनाचार्य्या-लये वसन् तत्रैव श्रीगौराङ्गचन्द्रेन सह मिलितः। ततः श्रीअद्वैता-

चार्य्योऽपि श्रीगौराङ्गसमीपमागतवान्। त्रयाणां प्रभुपादानां मिलने श्रीहरिसङ्कीर्त्तनमपि प्रबलतरं बभूव। दिवानिशं श्रीहरिसङ्कीर्त्तनेन नवद्वीपनगरी प्रचलिता आसीत्। दुरात्मनां मनांसि पङ्किल-सरांसीव क्षुभितानि। ते हि तन्निवारणार्थं बद्धपरिकरा बभूवुः। आत्मनाम् असामर्थ्यं विचिन्त्य यवनराजसाहाय्यमपि प्रार्थयामासुः। तदा श्रीगौराङ्गभक्ताः श्रीनित्यानन्दप्रमुखात् महाप्रभाव-शालिनः परोपकारपरायणा वैष्णवा श्रीनवद्वीपनगर्य्याः पथि पथि श्रीहरेर्नाम्नां प्रचारे प्रवृत्ता बभूवुः। राजभयेन संकीर्त्तनस्य न ह्रासतासीत्, अपि च दिने दिने प्रवृद्धिरेवालक्ष्यत। बहवः पण्डिताः अपि पाण्डित्याभिमानं परित्यज्य श्रीगौराङ्गचरणे आत्मसमर्पणं चक्रुः। अन्येऽपि जातिनिर्व्विशेषेण तथैव कृतवन्तः।

श्रीमन्नित्यानन्दावधूतः श्रीवासमन्दिरे उवास। श्रीवासपत्नी मालिनीदेवी तं पुत्रवत् स्निह्यति स्म। तदा तस्य वयः द्वात्रिंशद्वर्ष-परिमितम्। तस्य स्वभावमधुरया प्रकृत्या अलौकिकलावण्येन अमानुषेण तेजसा सर्व्वे नवद्वीपवासिनः अतीव विस्मिता बभूवुः। स तु प्रतिदिनमेव श्रीहरिनामप्रचारार्थं गृहस्थानां द्वारि द्वारि बभ्राम। एकदा श्रीमन्नित्यानन्दः श्रीहरेर्नाम उच्चन् "जगाइ"-"माधाइ"-संज्ञकयोर्द्वयो र्दुराचारयोर्विप्रतनययोः समीपं गतः। तौ तु मदिरामत्तौ तं तथाविधं दृष्ट्वा चुक्रुधतुः। तयोर्मध्ये माधाइ-नामा दुरात्मा क्रोधान्धः सन् भग्नकलसं निक्षिप्य श्रीमन्नित्यानन्दस्य शिरसि आजघान, परमदयालुः प्रशान्तगम्भीरः श्रीनित्यानन्दः तत्र कञ्चिदपि क्रोधमकुर्व्वन् निजहन्तारं पुनरपि हन्तुमुद्यतं तं माधाइ-नामकं दुरात्मनं सर्व्वपापप्रशमनं सर्व्वकल्याणनिदानं श्रीहरिनाम ग्राहयितुमयतिष्ट। तद्दर्शने जगाइ-नामकस्तत्सहचरः विस्मितः कृपापरवशश्च स्वसहचरं निवर्त्तयामास आह च मैवं कुरु। निरप-राधिनं महात्मानं प्रति मैवं व्यवहर। एवमुक्ते तस्मिन् दूरतः

एव श्रीमन्नित्यानन्दं रक्ताक्तकलेवरं दृष्ट्वा क्रुद्धप्राय: श्रीगौराङ्ग: द्वावपि दुरात्मानौ निर्भर्त्सयामास। श्रीमन्नित्यानन्दस्तु तं क्रुद्धं ज्ञात्वा तयो: क्षमापयितुम् उवाच। स्वामिन्! अनेन जगाइ-नामकेन न किञ्चिदप्यपराद्धमपि तु माधाइ-नामकम् एनं निवार्य्याहं रक्षित:। माधाइ-नामकोऽयमपि नापराधी। अयं मदिरामत्त: अज्ञानतोऽनेन यत् कृतं तदवश्यमेव क्षन्तव्यम्। यत: स्ववशेन नासदाचरितम्। तच्छ्रुत्वा श्रीगौराङ्ग: विहस्य प्रोवाच। त्वं कृपावतार: यत् अपराधिन्यपि रोषरहित:। त्वया य: दत्ताभय: स मयावश्यमेव क्षन्तव्यो भवति। इत्युक्त्वा तौ द्वौ दुरात्मानावालिङ्गितवान्। तदवलोक्य सर्व्वे समीपवर्त्तिन: सुविस्मिता आसन्। अतिदुरात्मानावपि तौ पाषण्डौ तयोश्चरणयो: पपतु:। स्वस्वापराधमनुस्मृत्य चक्रन्दतुश्च। तत: प्रभृति तौ दुरात्मानौ दुष्टांवृत्तिं विहाय धर्म्मात्मानौ बभूवतु:। धन्योऽयं श्रीगौराङ्गदेवस्य प्रभाव:। येन आजन्मन: दुरात्मानावपि अलौकिकशक्तिसञ्चारेण सत्स्वभावौ कृतौ। धर्म्मशास्त्राणामालोचनेन वेदाध्ययनेन च ययो: प्रकृति: परिवर्त्तनं सम्भावयितुमशक्यम् सा तु क्षणेनैव—कृपादृष्टिमात्रेणैव परिवर्त्तनं प्रापिता संशोधिता च। एताभ्यां दुष्टाभ्यां न कृतम् ईदृशं दुष्कर्म्म नास्ति। ब्रह्महत्या-सुरापान-गोहत्या-स्त्रीहत्या-प्रभृतीनि सर्व्वाण्येव पापान्याभ्यामनुष्ठितानि। मरणमेव येषां पापानां प्रायश्चित्तम् नरकमेव येषामवश्यम्भावि फलम् विनैव भोगेन तेषां पापानां नाशनं न केनाप्यन्यत्र कदापि दृष्टमस्ति। करुणया पापक्षालनस्यायमेव प्रथमो दृष्टान्त:। धन्य: श्रीगौराङ्ग:! धन्य: श्रीनित्यानन्दश्च।

( क्रमश:। )

सिद्धान्तवाचस्पत्युपनाम—

गोस्वामि श्रीश्यामलाल-शर्म्मण:।

---

# सुलभ-चिकित्सा ।

तत्र प्रथमं गर्भिणी-चिकित्सितम् ।

अहो दुर्दशा भारतीयानाम्, पुरा का कथा पुंसाम्, नार्य्योऽपि प्राचीना बालकादीनां अपनीनुरः क्षुद्ररोगान् जठरामयादीन् । तदर्थं वैद्येभ्यश्चिकित्सापेक्षा कापि नासीदेव । अधुनापि अप्रविष्टनव्य-सभ्यतासमीरणे क्वापि क्षुद्रग्रामे ग्रामीनाः नापेक्षन्ते चिकित्सार्थं इंरेजिचिकित्सकान् वैद्यान् वा । दूरमास्तामन्येषां रोगाणां रोगिणां वा कथा, अहो हृदयं विदीर्य्यते इव, लज्जासर्व्वस्वानां कुलयोषितां प्राणानिव लज्जाधनान्यपहरन्ति पुंचिकित्सकाः प्रसवनविधौ वीभत्सयन्त्रादिप्रयोगात् । अधुनापि तथा न घटते क्षुद्रग्रामे दरिद्रगृहे वा । परन्तु नगर्य्यां विलासिधनिगृहे एव कुष्ठव्याधिग्रस्तानामिव गृहकर्म्मसु विमुखीनां विलासिनीनां उत्तानं शयित्वा अश्लीलनाटकपठनशीलानामिव शरीरचालनाभावात् तथाविधा विपत् मुहुर्घटते । दरिद्रपत्नग्रस्तु ग्राम्यस्त्रियो वा तद्विपरीता इति न विपद्यन्ते । विशेषतस्तु ग्रामे प्राचीणा रमण्यः मातृमातामहीभ्यः विदितविविधौषधा यथासमयं सर्व्वत्र-सुलभेनौषधेन रोगविकृतिमपनयन्ति अतः सुखेन ताः प्रसूयन्ते । अद्य तान्यौषधादीनि चक्रदत्तादि शास्त्रसम्मतानीति कथाच्छलेन अन्तरान्तरा प्रकाश्यन्ते जगदुपकृतये इति ।

वधूः । मातः ! सञ्जातगर्भपीड़ा विमला भवत्या भेषजमहिम्ना निरुपद्रवा जाता । ईदृशमाशुकारि विषमसङ्कटहन्तृ भेषजं जगत् पालयितुः साधु साधकतमम् । अथ यद्येषा रुक् पुनरावर्त्तते, तदा केनोपायेन त्राणं लप्स्ये, जननि ! तमस्मान् वक्तुमर्हसि ।

वृद्धा । कल्याणि ! एषा शुश्रूषा नन्दयति माम्, अधुनातनैः प्रायो न

श्रूयते श्रेयः। परन्तु वाचालतया युज्यते वक्ता। भागधेये-नास्माकं त्वं यदीच्छसि श्रोतुम् तर्हि शृणुष्व प्रतिमासमेकैकं गर्भस्रावशूलघ्नं योगं मयोच्यमानम्।

तत्र प्रथममासि यदि गर्भे वेदना जायते तदा—

यष्टिमधु-शाकवीज-चीरकाकोल्यौ देवदारु चेति चत्वारि द्रव्याणि प्रत्येकं विंशतिगुञ्जाभिः परिमाय गव्येन पयसा पिष्ट्वा तेनैवालोड्य पातव्यानि। अथवा द्विगुणमानेन तैश्चतुर्भिरष्टपलजलसहित द्विपलगव्यदुग्धं पक्त्वा दुग्धावशिष्टं रक्षित्वा वस्त्रपूतं कृत्वा सुशीतं पातव्यम्। (शाकोमरुजस्तरुस्तस्य वीजं शाकवीजम्। पलं चतुःषष्टि गुञ्जाधिक षड़्रजतमुद्रामानम्।)

द्वितीये——अश्मलोटककृष्णातिलमञ्जिष्ठाः शतमूलश्चेति चत्वारि पूर्व्ववत् पिष्ट्वा पक्त्वा वा पातव्यानि।

तृतीये—

वृक्षादनी चीरकाकोल्यावनन्तमूलञ्चेति त्रीणि द्रव्याणि सप्त-विंशतिगुञ्जाभिः परिमाय पिष्ट्वा गोचीरेण पातव्याणि। अथवा द्विगुणमानेन गृहीत्वा पूर्व्ववत् चीरतोयाभ्यां पक्त्वा पातव्यानि। (वृक्षादनी वन्दाकः (परगाछा) गुड़ूचीति कैश्चित् व्याख्यायते।)

चतुर्थे—

अनन्तमूलश्यामलतारास्नाब्रह्मयष्टिकाः यष्टिमधुकञ्चेति पञ्च प्रत्येकं षोड़शगुञ्जाभिः परिमाय पिष्ट्वा गव्यदुग्धेन पातव्यानि। पक्षे द्विगुणमानेन गृहीत्वा पूर्व्ववत् पक्त्वा पातव्यानि।

पञ्चमे—

वृहतीत्वक् कण्टकारीगाम्भारीफलमृणालानि वटाश्वत्थप्लक्ष मधूकोडुम्बराणां पञ्चचीरिवृक्षाणां शृङ्गीस्त्वचश्चेति चतुर्द्दश द्रव्याणि षड़्गुञ्जामानेन पिष्ट्वा द्वादशगुञ्जामानेन पक्त्वा वा पूर्व्ववत् पयसा प्रयोज्यानि।

षष्ठे—

पृश्निपर्णी वाट्यालकमूलत्वक्शोभाञ्जनत्वग्गोक्षुराणि यष्टिमधुकञ्चेति पञ्च प्रत्येकं षोड़शगुञ्जामितेन पिष्ट्वा द्वात्रिंशद्गुञ्जामितेन पक्त्वा वा पूर्व्ववत् पयसा प्रयोज्यानि।

सप्तमे—

शृङ्गाटकमृणालद्राक्षाकशेरुयष्टिमधुकानि सितशर्करा चेति षट् प्रत्येकं सार्द्धत्रयोदशगुञ्जामितं पिष्ट्वा पयसा पातव्यानि। पक्षे यष्टिमधुकान्तानि पञ्च प्रत्येकं द्वात्रिंशद्गुंजामानेन गृहीत्वा पूर्व्ववत् क्षीरतोयाभ्यां पक्त्वा चत्वारिंशद्गुंजामितसितशर्करया युक्तं सुशीतं पातव्यम्।

अष्टमे—

कपित्थफल-विल्वमूलत्वक् बृहतीमूलत्वक्-पटोलपत्रेक्षुमूलानि गनिकारिकामूलत्वक् चेति षट् प्रत्येकं सप्तविंशतिगुंजामितानि क्षीरतोयाभ्यां पूर्व्ववत् पक्त्वा पातुं दद्यात्।

नवमे—

यष्टिमधुदूर्व्वाक्षीरकाकलशोऽनन्तमूलञ्चेति चत्वारि प्रत्येकं विंशतिगुंजामितानि पिष्ट्वा गोक्षीरेण पूर्व्ववत् पाययेत्।

दशमे—

शुण्ठ्या क्षीरविदार्य्या वा अशीति गुंजामितायाः पूर्व्ववत् पक्वं क्षीरं शीतीकृत्य पातव्यम्, शुण्ठीयष्टिमधुदेवदारुभिर्व्वा।

वधूः। मातः यस्या गर्भकालः संशयीत पञ्चमोमासः षष्ठोवेति तस्यै रुजावत्यै किं दातव्यमस्ति।

वृद्धा। तदर्थं सार्व्वमासिकौ द्वौ योगौ वक्ष्यामि। कुशकाशैरण्डमूलानि गोक्षुरमूलञ्चेति चतुर्भिर्द्रव्यैरेकत्रचत्वारिंशद् गुंजामितैरष्टपलजलसहितद्विपलगवयदुग्धं पक्त्वा द्विपलमवशिष्ट

मवतार्य्य वस्त्रपूतं कृत्वा चत्वारिंशद्गुंजामितसितशर्करया योजयित्वा सुशीतं पातुं प्रयच्छेत्।

कशेरुशृङ्गाटकपद्मकेशरनीलोत्पलमुद्गपर्णीयष्टिमधुकानि सितशर्कराचेति सप्त त्रयोविंशत्या गुंजाभिरेकशः परिमापयेत्। ततस्तानि पेशयित्वा गव्येन पयसा पातुं प्रयच्छेत्। गर्भिणीं पयसान्नञ्च भोजयेत्।

वधूः। एते द्वादशयोगाः श्रुताः। यथोपदेशमेतान् उपाचरिष्यामि यदि जानीयाम् काचित् गर्भिणी रुजास्रावाभ्यां पीड्यते।

वृद्धा। प्रयोज्य परोपकारितां स्वप्रीतिञ्च समधिगमिष्यसि—

वधूः। यदि कस्मिंश्चित् योगे किञ्चिद्द्रव्यमलभ्यं भवेत् तदा स किं न दातव्यः।

वृद्धा। दातव्यएव। तत्र युक्तिरियम्। यं व्याधिं शमयितुं यो योगः तदङ्गं प्रत्येकं द्रव्यं यदि तं व्याधिं न शमयेत् तदा स योगोऽपि तं व्याधिं जेतुं न शक्नुयात्। अतः सर्व्वाण्येव उपकुर्य्युरिति निर्धार्य्यताम्। तथा सति यथालाभं सेवितव्यान्येव। नहि कश्चिदेकस्य वन्धोरनुपस्थितौ सन्निकृष्टानपरान् हितैषिणोऽपकारिणो मत्वाऽपाकरोति।

वधूः। अथ यत्र चतुर्भिरेको योगः तत्र यद्येकमलभ्यं स्यात्तदा केन मानेन त्रीणि गृहीतव्यानि।

वृद्धा। तत्र त्रिभिरेव चतुर्णां मात्रा पूरयितव्या। एवं सर्व्वत्र पूर्णं मानं लब्धेन वस्तुना पूरयिष्यताम्।

चिकित्सक श्रीताराप्रसन्न सेन गुप्तः,
नं १६७ कर्णओयालिस ष्ट्रीट, कलिकाता।

---

# पूर्व्वकालीनाः कथं दीर्घायुषः?

( पूर्व्वप्रकाशितात् परम् । )

---

"आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसती"त्यस्यमनूक्तस्य आलस्यान्नदोषयोर्मृत्युकारणयोरालस्यस्य मृत्युकारणत्वं दर्शितमग्रहायणमासपत्रिकायाम्। अत्र अन्नदोषस्य मृत्युकारणत्वं दर्श्यते। अत्र अन्नं अदनीयवस्तुमात्रम्, तदपिमनूक्तं वक्ष्यमाणम्। तदपि प्रसङ्गात् सर्व्ववादिसम्मतं रोगहेतुकं मृत्युजनकञ्च अन्नादिकं मनूक्तमवगतये सर्व्वेषाम्, (स्यार उइलियम् जोन्स नामक साहेवस्य) (Sir William Jones) इंरेजिभाषानुवादसमेतं लिख्यते इहैव। यथा मनुस्मृतौ पञ्चमाध्याये ४—

"अनभ्यासेन वेदानामाचारस्य च वर्ज्जनात्।<br>
आलस्यादन्नदोषाच्च मृत्युर्व्विपान् जिघांसति ॥ ४ ॥

4. "Through a neglect of reading the *Veda*, through a desertion of approved usages, through supine remissness *in performing holy rites*, and through various offences in diet, *the genius of* death becomes eager to destroy them."

लशुनं गृञ्जनञ्चैव पलाण्डुं कवकानि च।<br>
अभक्ष्याणि द्विजातीनाममेध्यप्रभवानि च ॥ ५ ॥

5. "Garlic, onions, lecks, and mashrooms (which no twice-born man must eat), and all vegetables raised in dung."

लोहितान् वृक्षनिर्यासान् व्रश्चनप्रभवांस्तथा।<br>
शेलुं गव्यञ्च पेयूषं प्रयत्नेन विवर्ज्जयेत् ॥ ६ ॥

6. "Red gums, or resins, exuding from trees, and juices

---

गृञ्जनं—गाँजीर—शालगम् इति च यस्य प्रसिद्धिः। कवकानि छत्राकानि व्याङ्छाता इति येषां प्रसिद्धिः। अमेध्यप्रभवानि मृत्रूतविष्ठादि जातानि "कफि" इत्यादीनि ॥ ५ ॥

लोहितानिति। लोहितवर्णान् वृक्षनिर्यासान् वृक्षाद्विनिर्गतरसान्! आठा इति येषां प्रसिद्धिः ॥ ६ ॥

from wounded stems, the fruit *selu*, and the thickened milk of a cow within ten days after her calving, a priest must avoid with great care."

वृथा कृसरसंयावं पयसापूपमेव च ।
अनूपाकृतमांसानि देवान्नानि हवींषि च ॥ ७ ॥

7. "Ricepudding boiled with *tila*, frumenty, ricemilk, and baked bread, which have not been first offered to some deity. fleshmeat also, the food of gods, and clarified butter, which have not first been touched, while holy texts were recited."

अनिर्द्दशाया गोःक्षीरमौष्ट्रमैकशफं तथा ।
आविकं सन्धिनीक्षीरं विवत्सायाश्च गोःपयः ॥ ८ ॥

8. "Fresh milk from a cow, whose ten days are not passed, the milk of a camel, or any quadruped with a hoof not cloven, that of an ewe, and that of a cow in heat, or whose calf is dead or absent from her."

आरण्यानाञ्च सर्व्वेषां मृगानां माहिषं विना ।
स्त्रीक्षीरञ्चैव वर्ज्यानि सर्व्वशुक्तानि चैव हि ॥ ९ ॥

9. "That of any forest beast, except the buffalo, the milk of a woman, and any thing naturally sweet but acidulated, must all be carefully shunned."

"दधिभक्ष्यञ्च शुक्तेषु सर्व्वञ्च दधिसम्भवम् ।
यानि चैवाभिषूयन्ते पुष्पमूलफलैः शुभैः ॥१०॥

10. "But among such acids, buttermilk may be swallowed and every preparation of buttermilk, and all acids extracted from pure flowers, roots or fruit not cut with iron."

क्रव्यादान् शकुनीन् सर्व्वांस्तथाग्रामनिवासिनः ।
अनिर्द्दिष्टांश्चैकशफांष्टिट्टिभञ्च विवर्ज्जयेत् ॥११॥

11. "Let every twice-born man avoid carnivorous birds, and such as live in towns, and quadrupeds with uncloven hoofs, except those allowed by the *Veda*, and the bird called *tittibha*."

---

दधिसम्भवं तक्रादि (१०) क्रव्यादान् केवलमांसभोजिनः गृध्रादीन् । ग्रामनिवासिनः पारावतादीन् । एकशफाः एकखुराः अश्वगर्द्दभादयस्तान् । टिट्टिभान् पक्षिविशेषान् ।११।

कलविङ्कं प्लवं हंसं चक्राङ्गं ग्रामकुक्कुटम् ।
सारसं रज्जुवालञ्च दात्यूहं शुकसारिके ॥१२॥

12. "The sparrow, the water bird *plava*, the phenicopteros, the *chacravaca*, the breed of the towncock, the *sarasa* the *rajjuvala*, the woodpecker, and the parrot, male and female."

प्रतुदान् जालपदांश्च कोयष्टिनखविष्किरान् ।
निमज्जतश्च मत्स्यादान् सौनं वल्लूरमेव च ॥१३ ॥

13. "Birds, that strike with their beaks, webfooted birds, the *coyashti* those, who wound with strong talons, and those, who dive to devour fish: let him avoid meat kept at a slaughter house, and dried meat."

बकञ्चैव बलाकाञ्च काकोलं खञ्जरीटकम् ।
मत्स्यादान् विड्वराहांश्च मत्स्यानेव च सर्व्वशः ॥१४॥

14. "The heron, the raven, the *ch'anjana*, all amphibious fisheaters, tame hogs, and fish of every sort, *but those expressly permitted*."

यो यस्य मांसमश्नाति स तन्मांसाद उच्यते ।
मत्स्यादः सर्व्वमांसादस्तस्मान्मत्स्यान् विवर्जयेत् ॥१५॥

15. "He, who eats the flesh of any animal, is called the eater of that animal itself; and a fisheater is an eater of all flesh; from fish, therefore, he must diligently abstain."

पाठीन रोहितावाद्यौ नियुक्तौ हव्यकव्ययोः ।
राजीवान् सिंहतुण्डांश्च सशल्कांश्चैव सर्व्वशः ॥१६॥

16. Yet the two fish, called *pat hina* and *rohita*, may be *eaten by the guests*, when offered at a repast in honor of the gods or the manes; and so may the *rajiva*, the *sinhatunda*, and the *sasalca* of every species."

---

प्रतुदान् दार्व्वाघाटादीन् (काठठोकरा) इति यस्य प्रसिद्धिः । जालपादान् शरारिप्रभृतीन् । नखविष्किरान् कुक्कुटव्यतिरिक्तान् श्येनादीन् । निमज्जतो मत्स्यादान् मद्गुप्रभृतीन् ये जले निमज्ज्य मत्स्यं भक्षयन्ति तान् । सौनं हट्टे विक्रीतं मांसम् । वल्लूरं शुष्कमांसम् ।१३। मत्स्यादान् पक्षिव्यतिरिक्तान्नक्रादीन् । विड्वराहान् विष्ठाभोजिनः शूकरान् ग्राम्यानित्यर्थः । १४ । पाठीनादयस्तु भक्ष्याः । १५ ।

न भक्षयेदेकचरा न ज्ञातांश्च मृगद्विजान् ।
भक्ष्येष्वपि समुद्दिष्टान् सर्व्वान् पञ्चनखांस्तथा ॥१७॥

17. "Let him not eat the flesh of any solitary animals, nor of unknown beasts or birds, though by general words declared eatable, nor of any creature with five claws ;"

श्वाविधं शल्यकं गोधां खङ्गकूर्म्मशशांस्तथा ।
भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतो दत: ॥१८॥"

18. "The hedgehog and porcupine, the lizard *godha*, the *gandaca*, the tortoise, and the rabbit or hare, wise legislators declare lawful food among fivetoed animals; and all quadrupeds, camels excepted, which have but one row of teeth."

"यत्किञ्चित् स्नेहसंयुक्तं भक्ष्यंभोज्यमगर्हितम् ।
तत्पर्य्युषितमप्याद्यं हवि: शेषञ्च यद्भवेत् ॥२४॥

24. "That, which may be eaten or drunk, when fresh, without blame, may be swallowed, if touched with oil, though it has been kept a whole night; and so may the remains of clarified butter."

चिरस्थितमपित्वाद्यमस्नेहाक्तं द्विजातिभि: ।
यव गोधूमजं सर्व्वं पयसश्चैव विक्रिया ॥२५॥

25. "And every mess prepared with barley or wheat, or with dressed milk, may be eaten by the twice-born, although not sprinkled with oil."

"प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानाञ्च काम्यया ।
यथाविधि नियुक्तस्तु प्राणानामेव चात्यये ॥२७॥

27. "He should taste meat, which has been hallowed for a sacrifice with appropriated texts, and, once only, when a priest shall desire him, and when he is peforming a legal act, or in danger of losing life."

प्राणस्यान्नमिदं सर्व्वं प्रजापतिरकल्पयत् ।
स्थावरं जङ्गमञ्चैव सर्व्वं प्राणस्य भोजनम् ॥२८॥

28. "For the sustenance of the vital spirit, BRAHMA

---

एकचरान् सर्पादीन् ॥ १७ ॥

created all this animal and vegetable system ; and all, that is moveable or immoveable, that spirit devours."

चराणामन्नमचरा दंष्ट्रिणामप्यदंष्ट्रिणः ।
अहस्ताश्च सहस्तानां शूराणाञ्चैव भीरवः ॥२९॥

29. "Things fixed are eaten by creatures with locomotion ; toothless animals, by animals with teeth, those without hands, by those to whom hands were given ; and the timid by the bold."

नात्ता दूष्यत्यदन्नाद्यान् प्राणिनोऽहन्यहन्यपि ।
धात्रैव सृष्टा ह्याद्याश्च प्राणिनोऽत्तार एव च ॥३०॥

30. "He, who eats according to law, commits no sin, even though every day he taste the flesh of such animals, as may lawfully be tasted ; since both animals, who may be eaten, and those, who eat them, were equally created by BRAHMA."

यज्ञाय जग्धिर्मांसस्येत्येष दैवो विधिः स्मृतः ।
अतोऽन्यथा प्रवृत्तिस्तु राक्षसो विधिरुच्यते ॥३१॥

31. "It is delivered as a rule of the gods, that meat must be swallowed only for the purpose of sacrifice ; but it is a rule of gigantic demons, that it may be swallowed for any other purpose."

क्रीत्वा स्वयं वाप्युत्पाद्य परोपकृतमेव वा ।
देवान् पितॄंश्चार्चयित्वा खादन् मांसं न दूष्यति ॥३२॥ *

32. "No sin is commited by him, who, having honored the deities and the manes, eats fleshmeat, which he has bought, or which he has himself acquired, or which has been given him by another."

नाद्यादविधिना मांसं विधिज्ञोऽनापदि द्विजः ।
जग्ध्वा ह्यविधिना मांसं प्रेत्य तैरद्यतेऽवशः ॥३३॥

33. "Let no twice-born man, who knows the law, and is not in urgent distress, eat flesh without observing this rule ; for he, unable to save himself, will be devoured in the next world, by those animals whose flesh he has thus illegally swallowed."

न तादृशं भवत्येनो मृगहन्तुर्धनार्थिनः ।

यादृशं भवति प्रेत्य वृथामांसानि खादकः ॥३४॥

34. "The sin of him, who kills deer for gain, is not so heinous, with respect to *the punishment in* another life, as that of him, who eats fleshmeat in vain, *or not previously offered as a sacrifice*:"

नियुक्तस्तु यथान्यायं यो मांसं नात्ति मानवः ।

स प्रेत्य पशुतां याति सम्भवानेकविंशतिम् ॥३५॥

35. "But the man, who, engaged *in holy rites* according to law, refuses to eat it, shall sink in another world, for twenty-one births, to the state of a beast."

असंस्कृतान् पशून् मन्त्रैर्नाद्याद्विप्रः कदाचन ।

मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः ॥३६॥

36. "Never let a priets eat the flesh of cattle unhallowed with *mantras*, but let him eat it, observing the primeval rule, when it has been hallowed with those texts of the *Veda*."

कुर्य्याद्घृतपशुं सङ्गे कुर्य्यात् पिष्टपशुं तथा ।

न त्वेवतु वृथा हन्तुं पशुमिच्छेत् कदाचन ॥३७॥

37. "Should he have an earnest desire to taste fleshmeat, he may gratify his fancy by forming the image of some beast with clarified butter thickened, or he may form it with dough; but never let him indulge a wish to kill any beast in vain:"

यावन्ति पशुरोमाणि तावत्कृत्वो ह मारणम् ।

वृथा पशुघ्नः प्राप्नोति प्रेत्यजन्मनि जन्मनि ॥३८॥

38. "As many hairs as grow on the beast, so many similar deaths shall the slayer of it, for his own satisfaction in this world, endure in the next from birth to birth."

यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा ।

यज्ञोऽस्य भूत्यै सर्व्वस्य तस्माद्यज्ञे वधोऽवधः ॥३९॥

39. "By the selfexisting in person were beasts created for sacrifi ce; and the sacrifice *was ordained* for the increase of this

universe : the slaughterer therefore, of beasts for sacrifice is in truth no slaughterer."

ओषध्यः पशवो वृक्षास्तिर्य्यञ्चः पक्षिणस्तथा ।
यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः पुनः ॥४०॥

40. "Gramineous plants, cattle, timbertrees, amphibious animals, and birds, which have been destroyed for the purpose of sacrifice, attain in the next world exalted births."

मधुपर्के च यज्ञे च पितृदैवतकर्म्मणि ।
अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः ॥४१॥

41. "On a solemn offering to a guest, at a sacrifice, and in holy rites to the manes or to the gods, but on those occasions only, may cattle be slain : this law MENU enacted."

एष्वर्थेषु पशून् हिंसन् वेदतत्त्वार्थविद्द्विजः ।
आत्मानञ्च पशुञ्चैव गमयत्युत्तमां गतिम् ॥४२॥

42. "The twice-born man, who, knowing the meaning and principles of the *Veda*, slays cattle on the occasions mentioned, conveys both himself and those cattle to the summit of beatitude."

गृहे गुरावरण्ये वा निवसन्नात्मवान् द्विजः ।
नावेदविहितां हिंसामापद्यपि समाचरेत् ॥४३॥

43. "Let no twice-born man, whose mind is improved by learning, hurt animals without the sanction of scripture, even though in pressing distress, whether he live in his own house, or in that of his preceptor, or in a forest."

या वेदविहिता हिंसा नियतास्मिंश्चराचरे ।
अहिंसामेव तां विद्याद्वेदाद्धर्म्मो हि निर्ब्बभौ ॥४४॥

44. "That hurt, which the scripture ordains, and which is done in this world of moveable and immoveable creatures, he must consider as no hurt at all ; since law shone forth from *the light of* the scripture."

---

उच्छ्रितीः उत्कर्षान्, उन्नतीः ॥४०॥

योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया ।
स जीवंश्च मृतश्चैव न क्वचित् सुखमेधते ॥४५॥

45. "He, who injures animals, that are not injuriour, from a wish to give himself pleasure, adds nothing to his own happiness, living or dead."

यो बन्धनवधक्लेशान् प्राणिनां न चिकीर्षति ।
स सर्व्वस्य हितप्रेप्सुः सुखमत्यन्तमश्नुते ॥४६॥

46. "While he, who gives no creature willingly the pain of confinement or death, but seeks the good of all *sentient beings*, enjoys bliss without end."

यत् ध्यायति यत् कुरुते धृतिं बध्नाति यत्र च ।
तदवाप्नोत्ययत्नेन यो हिनस्ति न किञ्चन ॥४७॥

47. "He who injures no animated creature, shall attain without hardship whatever he thinks of, whatever he strives for, whatever he fixes his mind on."

नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् ।
न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्ज्जयेत् ॥४८॥

48. "Fleshmeat cannot be procured without injury to animals, and the slaughter of animals obstructs the path to beatitude ; from fleshmeat, therefore, let man obstain :

समुत्पत्तिञ्च मांसस्य वधबन्धौ च देहिनाम् ।
प्रसमीक्ष्य निवर्त्तेत सर्व्वमांसस्य भक्षणात् ॥४९॥

49. "Attentively considering the formation of bodies, and the death or confinement of embodied spirits, let him abstain from eating fleshmeat of any kind."

न भक्षयति यो मांसं विधिं हित्वा पिशाचवत् ।
स लोके प्रियतां याति व्याधिभिश्च न पीड्यते ॥५०॥

50. "The man who forsakes not the law, and eats not fleshmet, like a bloodthirsty demon, shall attain good will in this world, and shall not be afflicted with maladies.

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ।

संस्कर्त्ता चोपहर्त्ता च खादकश्चेतिघातकाः ॥५१॥

51. "He, who consents to the death of an animals; he, who kills it; he who, dissects it; he, who buys it; he, who sells it; he, who dresses it; he, who serves it up; and he, who makes it his food; these are eight principals in the slaughter."

स्वमांसं परमांसेन यो वर्द्धयितुमिच्छति ।

अनभ्यर्च्च्य पितॄन् देवान् ततोऽन्यो नास्त्यपुण्यकृत् ॥५२॥

52. 'Not a mortal exists more sinful than he, who, without an oblation to the manes or the gods, desires to enlarge his own flesh with the flesh of another creature."

वर्षे वर्षेऽश्वमेधेन यो यजेत शतंसमाः ।

मांसानि च न खादेद्यस्तयोः पुण्यफलं समम् ॥५३॥

53. "The man, who performs annually, for a hundred years, an *aswamedha*, or *sacrifice of horse*, and the man, who abstains from fleshmeat, enjoy for their virtue an equal reward."

फलमूलाशनैर्मेध्यैर्मुन्यन्नानाञ्च भोजनैः ।

न तत्फलमवाप्नोति यन्मांसं परिवर्ज्जनात् ॥५४॥

54. "By subsisting on pure fruit and on roots, and by eating such grains as are eaten by hermits, a man reaps not so high a reward, as by carefully abstaining from animal food."

मां स भक्षयितामुत्र यस्य मांसमिहाद्म्यहम् ।

एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥५५॥

55. "Me he (*mansa*) will devour in the next world, whose flesh I eat in this life;' *thus should a flesheater speak, and* thus the learned pronounce the true derivation of the word *mansa*, or flesh."

न मांसभक्षणे दोषो न मद्ये न च मैथुने ।

प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥५६॥

56. "In lawfully tasting meat, in drinking fermented liquor, in caressing women, there is no turpitude; for to such enjoyments men are naturally prone: but a virtuous abstinence from them produces a signal compensation.

( क्रमशः। )

---

# तत्त्वप्रपञ्चे

## वैदिकोपायः।

( पूर्व्वप्रकाशितात् परम्। )

यो योऽश्वमेधेन यजते स सर्व्वान् लोकान् जयतीत्याद्युक्तम्। वेदोक्तिस्तु स्वतःप्रमाणम् न कदापि व्यभिचरतीति सर्व्वमेव विश्वस्तव्यम्।

सत्यम्, भवतु तत्त्वज्ञानात् सुकरो वैदिको यज्ञाद्युपायो मोक्षाय, किन्तु तथापि तत्त्वज्ञानापेक्षया नासौ यज्ञादिः समीचीनसाधनम्। कस्मात् हिंसादिदोषदुष्टत्वात्। यज्ञादौ तु प्रज्ज्वलिते जातवेदसि जीविनो व्रीह्यादयो वीजानि हूयन्ते, पशवश्च हन्यन्ते। अतोऽसौ समनुज्ञातोऽपि वेदैः यज्ञादिर्नानुष्ठातुं युज्यते दयापरतन्त्रै र्विद्वद्भिः, ऋते हिंसाप्रियान् चाण्डालान्। वेदप्रतिपादितेन यज्ञेन स्वर्गसुखं यथा भवेत् तथा पशुवीजादिवधजनितपापेन नरकभोगदुःखमपि भवेदेव। परन्तु तेन हिंसाश्रितयज्ञेन सुखभागस्याधिक्यम् दुःखभागस्य तु अल्पत्वमिति। तथाच पञ्चशिखाचार्य्येणोक्तम्, "स्वल्पसङ्करः सपरिहारः सप्रत्यवमर्ष" इति। *

---

* अस्यार्थः। स्वल्पसङ्करः अश्वमेधादियज्ञीयस्वर्गादिः स्वल्पेन अत्यल्पपरिमाणेन पशुवीजहिंसादि जनितेन पापेन सङ्करः मेलनं एकत्रावस्थानम्। सपरिहारः परिहारेण सह वर्त्तते अर्थात् कियतापि प्रायश्चित्तेन परिहर्त्तुं पशुवीजादिवधजनितपापं शमयितुं

अथ वैधहिंसास्थले अल्पमपि पापं नास्ति इत्येव न कथं कल्प्यते। तथा च मनुनाप्युक्तम्। पञ्चमाध्याये।

"यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा।
यज्ञोऽस्य भूत्यै सर्व्वस्य तस्माद्यज्ञे वधोऽवधः॥

ओषध्यः पशवो वृक्षास्तिर्य्यञ्चः पक्षिणस्तथा।
यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युच्छ्रितीः पुनः॥

मधुपर्के च यज्ञे च पितृदैवतकर्म्मणि।
अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः॥

एष्वर्थेषु पशून् हिंसन् वेदतत्त्वार्थविद्द्विजः।
आत्मानञ्च पशुञ्चैव गमयत्युत्तमां गतिम्॥

गृहे गुरावरण्ये वा निवसन्नात्मवान् द्विजः।
नावेदविहितां हिंसामापद्यपि समाचरेत्॥

या वेदविहिता हिंसा नियतास्मिंश्चराचरे।
अहिंसामेव तां विद्याद्वेदाद्धर्म्मो हि निर्बभौ॥"

इत्यादिवचनैर्यज्ञे पशुहिंसया पशोर्यजमानस्य च सद्गतिविधानात् कथं यज्ञे पापाशङ्का? विष्णुनापि एतदेवाभिहितम् एकपञ्चाशत्तमाऽध्याये। अल्पपापन्तु पञ्चशिखाचार्य्योक्तं अवैधपशुहिंसास्थले एव कल्प्यते। नैवम्, अवैधहिंसायाः सर्व्वथा निषिद्धत्वात् अत्यन्तपापजनकत्वमेव, तथा च मनुनोक्तम्, पञ्चमाध्याये।

योऽहिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया।
स जीवंश्च मृतश्चैव न क्वचित् सुखमेधते॥

इत्यादि बहुषु शास्त्रेषु अवैधहिंसायाः अतिशयपापजनकत्वात् वैधहिंसास्थले एव अल्पपापं कल्पयितुमुचितम्।

---

शक्यः। सप्रत्यवमर्षः प्रत्यवमर्षेण सहिष्णुतया सह वर्त्तते इति सः। यदि अश्वमेधादि यज्ञानन्तरं पशुवीजादिवधजातपापनाशाय प्रमादात् प्रायश्चित्तमपि नानुष्ठितम्। तदा तद्यज्ञस्य प्रधानफलरूपस्य स्वर्गसुखस्यावसानसमये पशुवीजादिवधपापस्याप्ि फलं नरकदुःखं अवश्यमनुभूयते। तथापि तेन पापेन यत्परिमितं दुःखमुत्पद्यते तद्दुःखं सहिष्णुतया अनुभूयातिपात्यते। तितिक्षवस्ते हि खलु बहुतरपुण्यकर्म्मोपनीतस्वर्गसुधाहूदे अवगाहनपराः अल्पपापफलं दुःखविस्फुलिङ्गमिति।

न च "मा हिंस्यात् सर्व्वाभूतानि" इति सामान्यशास्त्रं विशेषशास्त्रेण "अश्वमेधेन स्वर्गकामो यजेत" "वायव्यां श्वेतं छागलमालभेत" "अग्नीषोमीयं पशुमालभेत" इत्यादिना बाध्येत। तेन हि अशास्त्रीयं न कमपि प्राणिनं हिंसेत् किन्तु शास्त्रमनुसृत्य प्राणिनं हिंसेदित्येवं विधिरायाति।

ततश्च अवैधहिंसा पापकरी, वैधहिंसा तु न पापकरीत्येवमर्थः सुतरां प्रतिभाति। नैवम् "मा हिंस्यात् सर्व्वाभूतानि एवं "अग्नीषोमीयं पशुमालभेत" (*) इत्यनयोर्नास्ति विरोधः, विरोधे हि सति वलीयसा दुर्व्वलं बाध्यते, अतो विरोधाभावात् परस्परं द्वयोर्व्वाक्ययो र्बाध्यबाधकता नास्ति। तथाहि "मा हिंस्यादित्यनेन निषेधेन प्राणिमात्रहिंसा अनिष्टसाधिका इत्येवमर्थः प्रतिपाद्यते, न तु अवैधहिंसा अनिष्टसाधिकेति" एवमर्थः। एवं "अग्नीषोमीयं" इत्यनेन तु पशुहिंसा अग्नीषोमीययज्ञोपकारिणी इत्येवार्थः कथ्यते, न तु पशुहिंसा पापजनिका न इत्येवमर्थः सूच्यते। भवतु यज्ञोपकारिणी यज्ञीयहिंसा, किन्तु तया पापं न जायते इति कथं लभ्यते?। यदि तथाविधोऽर्थः स्यात् तदा अत्र वाक्यभेदापत्तिः स्यात्। तथाहि अग्नीषोमीयमित्यत्र पशुहिंसा अग्नीषोमीययज्ञोपकारिणी इत्येकं वाक्यम्। अग्नीषोमीयपशुहिंसा न पापजनिका च इति द्वितीयं वाक्यम्। इत्येवं वाक्यभेदः स्यात्। स च न दृष्टः, सम्भवत्येकवाक्ये तु वाक्यभेदो न चेष्यते इति न्यायात्।

---

* मा हिंस्यात् सर्व्वा भूतानि। अस्यार्थः सर्व्वभूतत्व व्यापकहिंसाभावविषयकं कार्य्यम्। अत्र हिंसाभावजन्यापूर्व्वन्तु फलाजनकं हिंसाभावे विध्यर्थस्येष्टसाधनत्वस्यान्वयः। हिंसायान्तु अनिष्टसाधनत्वम्। यद्यस्य साधनं तदभावस्तत्परीहारसाधनम् इति नियमात्। "मा हिंस्यादित्य[illegible]अग्नीषोमीयं पशुमालभेत्यनेन न बाध्यबाधकता विरोधाभावात्। तथाहि मा हिंस्यादित्यनेन हिंसायामनिष्टसाधनत्वं बोधितम्, अग्निसोमदेवताकपश्वालम्भने तु यागाङ्गत्वं अनिष्टसाधनत्वञ्चोभयमिति। अतस्त्वविरुद्धयोः समावेशोयुक्त एवेति। नन्वग्नी-

अतो यज्ञीयवैधहिंसयापि किञ्चित् पापं जायते एव। अतस्तत्त्वज्ञानापेक्षया वैदिककर्मकलापः पशुबीजादिहिंसादोषदुष्टत्वाद्धेयः।

किञ्च। इतश्च कारणात् वैदिकोपायो न सम्यक्, तथाहि अश्वमेधेन स्वर्गो लभ्यते इति सत्यम्। किन्तु भोगात् क्षीयतेऽपि। स्वर्गस्तु यज्ञादिजन्यः अतः स्वर्गः क्षयी जन्यत्वादित्यनुमीयते। ततश्च स्वर्गभोगक्षयानन्तरं पुनर्दुःखमिति।

तथाच गीतायामुक्तम्। ९।२०-२१।

"त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान्॥
ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति।
एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते॥"

(क्रमशः।)

---

षोमीयं पशुमालभेतेत्यनेन हिंसायामनिष्टसाधनत्वाभावो ज्ञाप्यताम्। नैवं तथात्वे वाक्यभेदापत्तेः। तथाहि पशुहिंसायां क्रत्वङ्गत्वेऽनिष्टसाधनत्वाभावे च परिबोधिते सति विधेययोः क्रत्वङ्गत्वानिष्टसाधनत्वाभावयोर्भेदात् वाक्यभेदप्रसक्तिः। तथाहि गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात् स्यात् इति। अस्यार्थः—गुणानां उद्देश्य विशेषणानां विधेयानाञ्च परार्थत्वात् विशेष्यमात्रसाकाङ्क्षत्वात् असम्बन्धः परस्परगुणगुणिभावेनानन्वयः। अत्रहेतुमाह समत्वादितितुल्यत्वादित्यर्थः। अनेन न्यायेन तु क्रतूपकारत्व अनिष्टसाधनत्वाभावयोर्गुणगुणिभावेन—अर्थात् विशेष्य विशेषणभावरूपेणान्वयबाधात्। हिंसारूपोद्देश्ये च प्रत्येकान्वये विधेयता भेदात् विशेष्यता भेदः अतएव वाक्यभेद इति। यथा यावज्जीवमग्निहोत्रं जुहोती [illegible] उपसद्भिश्चरित्वा मासमेकमग्निहोत्रं जुहोतीत्यपरविधिः। अत्र जुहोतिल्यनेन यावज्जीवाग्निहोत्रमनूद्य उपसत्त्वयानन्तर्य[illegible] मासैकसाध्य[illegible] च विधाने विधेयभेदात् वाक्यभेदः। प्रमा[illegible]राप्राप्तत्व विधेयत्वं प्राणान्तरप्राप्तत्वमुद्देश्यत्वम्। यथा, ग्रहं सम्मार्ष्टि [illegible] [illegible] [illegible] ग्रहमेवोद्देश्यम्, [illegible] ग्रहमित्यत्र एकत्वविधेयं प्रमाणान्तराप्राप्तत्वात् [illegible]दिक्। (अत्र वैधहिंसाविचारस्यातीव जटिलार्थत्वात् लेखनेन सम्यक् बोधयि[illegible] न [illegible]ते अतो गुरुमुखाज्ज्ञातव्योऽसाविति)।

श्रीश्रीदुर्गा ।

शरणम् ।

# संस्कृतचन्द्रिका ।

( १८१५ शाक माघमासस्य । )

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव ।

मायाबलम्बते सेयमम्बा श्रीशिवसुन्दरी ॥

## उद्भट-श्लोकाः ।

"मुखेन वाद्यं सलिलेन पाद्यम्, मूर्त्तिर्मृदा विल्वदलेन पूजा ।
फलं पुनस्तस्य भवेदनन्तम्, निःस्वस्य विश्वेश्वर एव देवः ॥"४९॥

"असारे खलु संसारे सारमेतच्चतुष्टयम् ।
काश्यां वासः सतां सङ्गो गङ्गाम्भः शम्भुसेवनम् ॥"५०॥

"हरिं हरीतकीञ्चैव गायत्रीं जाह्नवीजलम् ।
अन्तर्मलविनाशाय स्मरेद्भक्षेदजपेत् पिबेत् ॥"५१॥

"हरीतकीं भुङ्क्ष्व राजन्! मातेव हितकारिणी ।
कदाचित् कुप्यते माता नोदरस्था हरीतकी ॥"५२॥

"सीताया हृदि यच्छिरीषकुसुमप्राये मृणालीचकैः,
पौलस्त्यस्य नितान्तकुण्ठकुलिशे वज्राधिके वक्षसि ।
आपुङ्खं निममज्ज मन्मथशर स्तन्नैव जानीमहे,
कः शाखी सखि! यस्य पुष्पमभवत् पुष्पायुधस्यायुधम् ॥"५३॥

"वैदेहि! याहि कलसीभवधर्म्मपत्नीम्, तस्याः पुरः कथय पूर्व्वकथाः समस्ताः ।
दृष्टापि सा वद पयोनिधिबन्धनं मे, सेयं पुनश्चुलुकिताम्बुनिधिः कलत्रम् [illegible]॥

"स श्लोकः श्लोकतां याति विज्ञातरि निवे[illegible]
अविज्ञातरि विज्ञाते चकारस्तत्र लुप्यते ॥"५५॥

"इतरतापशतानि [illegible] यथेच्छया [illegible] वितर तानि सहे चतुरानन! ।
अरसिकेषु रसस्य निवे[illegible] शिरसि मा लिख मा लिख मा लिख ।"५६

"तथा कवितया किं [illegible] वा [illegible]तया ।
पदविन्यासमात्रेण मन[illegible] [illegible]यया ॥"५७॥

# ईश्वरनिष्ठमन्त्री ।

आसीत् हिन्दुस्थाने कस्यचिद्राज्ञः स्वच्छान्तो नाम ज्यायान् (१) मन्त्री, स चाकौमारात् मन्त्रित्वपदमाश्रितो वृद्धभावं गतः। स्मारं स्मारञ्च जगतः कार्य्यजातमिदमेव तत्त्वं चेतसि निश्चिकाय (२) यद् यदीश्वरः कुरुते तदस्माकं मङ्गलार्थमेवेति, ब्रूते च प्रतिकथम्, "नारायणजी यो किया सो अच्छा हि किया" इति। विश्वसिति च तथैव। अनेके प्रतिक्षणमेवं ब्रुवन्तं मन्त्रिणं तमुपहसन्ति, भण्डभक्तोऽयमिति ईर्ष्याकलुषाभ्यामीक्षन्ते च दृग्भ्याम्। किन्तु तेन हि मन्त्रिणा तेषां कटाक्षपातः भ्रूभङ्गिरुपहासः व्यङ्गोक्तिश्च दृष्ट्वापि न दृश्यते, श्रुत्वापि न श्रूयते, एवमेव कालोऽतिपात्यते।

अथैकदा वर्षाकाले स राजा पर्य्यवेक्ष्य राजकार्य्यम्, प्रविविक्षन् (३) अन्तःपुरं पिच्छिले प्रस्तरसोपाने स्खलितपादः मर्म्माहतं पपात, भग्नपादग्रन्थिस्सु मूर्च्छं च। ततश्च सत्रासं प्रधावन्तो भृत्या स्वां देवपादस्य दुर्द्दशां मन्त्रिणे निवेदयामासुः। श्रुत्वा च मन्त्री विश्वासाभ्यासयोर्विवशः "नारायणजी यो किया सो अच्छा हि किया" इत्यूचे। नियोजयामास च शस्त्रशास्त्रप्रवीणं राजचिकित्सार्थमगदङ्कार(४)मेकम्। भृत्यास्तु शात्रवीमिव तथाविधां निष्ठुरां गिरमाकलय्य संजातकोपाः कियन्ति दिनानि गमयित्वा लब्धारोग्याय राज्ञे विज्ञापयाम्बभूवुः। राजा च व्यवहारं तमसमीचीनं मन्त्रिणः सम्भाव्य निश्चित्य च "असौ मन्त्री मम राज्यं जिहीर्षुर्वा किमपि विधित्सुर्वा" इति अन्तः क्रोधश्चिन्तयाञ्चकार।

अथ यदि मुञ्चेयम् प्राच्य(५)मिमं दुष्टाशयमपि मन्त्रिणम्, तदा

(१) वृद्धः। (२) निश्चितवान्। (३) प्रवेष्टुमिच्छन्। (४) चिकित्सकम्। (५) प्राचीनम्।

मां सर्व्वे जुगुप्सेरन् (१)। किन्तु यद्यहं केनापि व्याजेन तं प्रमापये (२) तदा स्वाभिलषितं साधये, इत्येवं मनसा विचारयामास।

अथैकदा राजा समाहूय मन्त्रिणमब्रूत—मन्त्रिन्! यदि मन्यसे तदा मृगयायै जिगमिषामि, भवताप्यनुगन्तव्यम्। मन्त्री अवदत् यथाज्ञापयन्ति राजपादा इति। परेद्युः (३) सह राज्ञा मन्त्री मृगयार्थमगच्छत्। राजा तु कस्मिंश्चित् पर्व्वते किञ्चित् भीषणं काननं सह मन्त्रिणा प्रविश्य अकथयत्—मन्त्रिन्! इतोऽयं महिषो धावति, इतो भल्लूको याति, ततः शूकरः पलायते, अत्र करी मड़मड़ेति तरून् विदारयति, द्रुतमागच्छ मन्त्रिन्! विलम्बं मा कुरु, इत्यादुक्त्वा सैन्यादिकं पश्चाद्दूरे परित्यज्य महारण्यं दिवसेऽप्यन्धकारं प्राविशत्। प्रादर्शयच्च तत्र मन्त्रिणं कञ्चित् कूपम्, अवक् च, (४) अहो पश्य पश्य अपूर्व्वमिमं कूपम्, यत्र सौरकरसन्तप्तस्तिमिरपटलः पुञ्जीभूतो कूपेऽस्मिन्नवातरद्दिवावगाहनाय। मन्त्री तु यावदधोमुखं कूपं पश्यति तावद्राज्ञा झटिति पृष्ठे आहत्य तत्र निपातितः। पतन्नपि स "नारायणजी यो किया सो अच्छा हि किया" इत्युच्चैरुदचरत्। तत्र पतित्वा च सक्लेशं कथमपि कञ्चित् प्रस्तरखण्डमालम्ब्यातिष्ठत्।

अथ राजा तं मन्त्रिणं पातयित्वा कूपे, तस्मात् काननात् निर्गन्तुं इतस्ततो विचरन् मन्त्रिवधान्मनस्तासेन दिग्भ्रान्तः द्विगुणतरं गहनं प्राविशत्। इतश्च तस्मिन् काले भगवानपि तीक्ष्णभानुस्तस्य कृतघ्नस्य राज्ञः शरीरे करस्पर्शोऽपि न समुचित इति द्रागस्तमयात्। सूचीभेद्यस्तिमिरव्रातोऽपि राज्ञो नयनमपिधाय (५) ग्रासाय प्राधावत्, तमस्विन्यां समागतायां पत्नीसखः (६) शोणचक्षुस्तरक्षुः(७) विकटमगर्ज्जत्, फेरवः "फे" "फे" इत्यनुरवं अन्यस्य शृगालस्य रव-

(१) निन्देयुः। (२) विनाशये। (३) परदिने। (४) अवदत्।
(५) आच्छाद्य। (६) सस्त्रीकः। (७) व्याघ्रः।